# अथ प्रत्यक्षखण्डम्

ध्यायं ध्यायं महामायां शङ्करञ्च जगद्गुरुम्।
विद्याधरान् गुरून् वन्दे न्यायमार्गप्रदर्शकान् ॥१॥
स्वयंप्रकाशनामानं सर्वशास्त्रविशारदम्।
प्रणमामि सदा भक्त्या निखिलाज्ञानभञ्जनम् ॥२॥

चूड़ामणीत्यादिश्लोके कथं समाप्तपुनरात्तत्वं काव्य-दोषः ? कथञ्च तन्निरासः ?

चूड़ामणीत्यादिश्लोके 'भवः' इति पदं 'भवतु' इति क्रिया-पदेनान्वेति आकांक्षा च शाम्यति। ततः लीलाताण्डवपण्डित इति विशेषणान्तरेण सम्बन्धार्थं विशेष्यं पुनरादीयते। यत्र विशेष्य-पदं क्रिययान्वेति वाक्यञ्च शान्ताकांक्षं भवति, ततश्च विशेषणा-न्तरेण यदि सम्बन्धार्थं विशेष्यं पुनरादीयते तत्र समाप्त-पुनरात्तत्वं काव्यदोषो भवति। समाप्तमथ च पुनरात्तमित्यन्वर्थकदोषोऽयम्। तत्र भवान्तानि प्रथमान्तानि विशेषणानि लीलाताण्डवपण्डित इति च विशेष्यपदम्। अथवा प्रयोजनाकांक्षाशान्त्यर्थं तद्विशेषण-स्यावश्यकत्वात्। किमर्थं विधोश्चूड़ामणीकरणं किमर्थं वासुके-[illegible] [illegible]मिति प्रयोजनाकांक्षा लीलाताण्डव-[illegible] [illegible]न शाम्यतितस्मान्नात्र समाप्तपुनरा-

सद्रव्येत्यादिकारिका व्याख्येया ।

सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥

इति रीत्या श्रोतॄणां प्रवृत्तयेऽनुबन्धचतुष्टयमाह विश्वनाथः। सद्रव्या=पृथिव्यादिनवद्रव्यसहिता । गुणगुम्फिता=गुणैः रूपरसादिभिश्चतुर्विंशतिसंख्याकैः गुम्फिता=युक्ता । सत्कर्मणाम्=उत्क्षेपणादिपञ्चविधकर्मणां ज्ञापिका=बोधिका । सत्सामान्यम् सत्=श्रेष्ठं सामान्यं जातिः विशेषः=विशेषाख्यः पदार्थः। नित्यः=समवायाख्योनित्यसम्बन्धः तैः मिलिता । अथवा-नित्यमिलितंसमवायसम्बन्धः । सन्ति सामान्य विशेषनित्यमिलितानि यस्यां सा । अभावस्य यः प्रकर्षः=प्रागभावादिरूपप्रपञ्चस्तस्योज्ज्वला=प्रकाशयित्री । एषा=बुद्धिस्था सिद्धान्तमुक्तावली=वादिप्रतिवादिभ्यां निर्णीता अर्थाः सिद्धान्तास्त एवमुक्तास्तासामावली=पंक्तिः । विष्णोर्नारायणस्य वक्षसि=अग्रे विन्यस्ता=समर्पिता । विश्वनाथश्चासौकृती=पण्डितःतेन नारायणाग्रे समर्पिता । सुकृतिनाम्=पण्डितानां मनसो मुदम्=प्रसन्नताम् चिरं=बहुकालम् । वितनुताम्=विस्तारयतु । कथं भूता सद्युक्तिः=सत्योवादिभिरखण्डनीया युक्तयस्तर्का यस्यां सा ।

मालापक्षे सद्रव्या=मरकतमण्यादिद्रव्ययुक्ता । गुणेन=सूत्रेण । गुम्फिता प्रोता । सत्कर्मणाम्=शुभ कर्मणां । ज्ञापिका=अनुमापिका । सत्सामान्यम् उत्तमा जातिः । विशेषः=मुक्तानां महत्त्वं निर्मलत्ववर्तुलत्वादिकञ्चताभ्यां नित्यं सदैव मिलिता । अभावे=तेजोऽभावे प्रकर्षेणोज्ज्वलाप्रकाशयित्री । सती=समीचीना युक्तिःप्रथमविशेषायस्याःसा । विष्णोर्वक्षसि=वक्षःस्थले । विन्यस्ता=

भक्ति श्रद्धादिभिः समर्पिता। सिद्धः=समीचीनः अन्तोमेरुप्रदेशो-यस्याः सा मुक्तानामावली=मुक्तावली सिद्धान्ताचासौ मुक्तावली चिरं मनसो मुदं वितनुताम्।

एतेन द्रव्यादिसप्तपदार्था विषयः। तज्ज्ञानं प्रयोजनं तज्जिज्ञासुरधिकारी। विषयग्रन्थयोः प्रतिपाद्यप्रतिपादकभावसम्बन्ध इत्यनुबन्धचतुष्टयं प्रादर्शि। मुक्तावलीसाम्यप्रतिपादेन निर्दोषत्वं श्रेष्ठत्वञ्च ग्रन्थस्य सूचितम्।

मङ्गलस्य सफलतां संसाध्य तत्र फलविषये प्राचीनानां नवीनानाञ्च मतं प्रतिपादयत।

ननु मङ्गलस्य विघ्नध्वंसोनवा समाप्तिः फलमन्वयव्यतिरेकव्यभिचारदर्शनात्। तथाहि रसगङ्गाधरादौ सत्यपि मङ्गले समाप्तिर्न दृश्यते किरणावल्यादिनास्तिकग्रन्थे मङ्गलाभावेऽपि समाप्ति र्दृश्यते इतिचेन्न अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वात्। रसगङ्गाधरादौ विघ्नबाहुल्यान्न समाप्तिः किरणावल्यादौ तु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः स्वतःसिद्धविघ्नात्यन्ताभावोवाऽस्ति कार्यत्वावच्छिन्नम्प्रति प्रतिबन्धकाभावस्यापि कारणत्वाभ्युपगमादिति न व्यभिचारः। प्राचीनमते मङ्गलस्य समाप्तिः फलमुपस्थितत्वाद् विघ्नध्वंसश्च व्यापारो नवीनमते तु विघ्नध्वंस एव फलम्। नच यत्र विघ्ना न सन्ति तत्र नवीनमते कृतस्य मङ्गलस्य निष्फलत्वापत्तिरिति वाच्यम्, इष्टापत्तेः विघ्नाशङ्कया तदाचरणात् नापि मङ्गलस्य निष्फलत्वात्तद्बोधकवेदाप्रामाण्यमिति शङ्कनीयम्, सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात। अतएव पापभ्रमेण कृतस्य प्रायश्चितस्य निष्फलत्वेऽपि न तद्बोधक वेदाप्रामाण्यम्।

समाप्तिस्तु प्रतिभादिकारणसमूहाद् भवत्यतो विघ्नध्वंस एव फलमिति नव्याशयः ।

## पूर्वपक्षनिरासपूर्वकमीश्वरं साधयत ।

नन्वीश्वरो नास्ति प्रत्यक्षप्रमाणाभावादितिचेन्न प्रत्यक्षप्रमाणा भावेऽप्यनुमानेन तत्सिद्धेः । तथाहि-क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वात् घटवत् । यत् यत् सावयवं तत्तत् कार्यं यत् यत् च कार्यं तत् तत् कर्तृजन्यं यथा घटस्य कर्ता कुलालः पटस्य कर्ता तन्तुवायस्तथैव क्षित्यङ्कुरादिकस्य यः कर्ता स एवेश्वरः । नच तत्कर्तृत्वमस्मदादीनां क्षुद्रप्राणिनां सम्भवति । न च "क्षित्यङ्कुरादिकं कर्त्रजन्यं शरीराजन्यत्वात् आकाशवत्" इत्यनुमानेन पूर्वोक्तं सत्प्रतिपक्षितमिति वाच्यम्, नस्तिकमते क्षित्यरादिङ्कुकमस्तु शरीराजन्यं माऽस्तु कर्त्रजन्यमिति व्यभिचारशङ्कानिवर्तकानुकूलतर्काभावात् । मन्मते तु सत्यां व्यभिचारशङ्कायां कार्यकारणभाव एवानुकूलस्तर्कः ।

## वेदोऽपि तत्सद्भावे प्रमाणम् ।

"द्यावा भूमीजनयदेव एकः" "विश्वस्य कर्ता भुवनस्य गोप्ता" एवमन्यदपि प्रमाणमूह्यम् ।

किंच—

जगतां यदि नो कर्ता कुलालेन विना घटः ।<br>
चित्रकारं विना चित्रं स्वत एव भवेत्तदा ॥

## शक्तेरतिरिक्तपदार्थत्वमस्ति नवा ?

ननु कथं सप्तैव पदार्थाः शक्तेरप्यतिरिक्तपदार्थत्वात् । तद् यथाऽग्नेः समीपे चन्द्रकान्तमणिरानीयते तदा दाहो न भवति

- * उत्तेजकाभावेन विशिष्टो यो मण्यादि अभाव. स्तेन विशिष्टः।



तदभावे तु भवति तेनानुमीयते यन्माणिना वन्हेः शक्ति र्नाश्यते। अनुमानञ्चेदम् – वह्निर्मणिनाश्यदाहानुकूलशक्तिमान् मणिसमवधाने दाहाजनकत्वात् यन्नैवं तन्नैवं यथा घट इति। तन्नदाहम्प्रति-स्वतन्त्रो वह्निर्न कारणमपि तु * उत्तेजकाभावविशिष्टमण्याद्यभाव-विशिष्टोवन्हिर्दाहकारणम्। अत एवोभयमणिसद्भावे दाहो न विरुध्यते तत्र विशेषणाभावप्रयुक्तविशिष्टाभावस्य सत्त्वात्। अनन्त-शक्तितत्प्रागभावप्रध्वंसकल्पने गौरवादुक्तरीत्यैव निर्वाहाच्छक्तिर्न पदार्थान्तरम्।

× उत्तेजके प्रतिबन्धके च मणौ सति

## सादृश्यं कथं नातिरिक्तः पदार्थः ?

ननु "सादृश्यं षड्भावानन्तर्भूतं सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वात्" भवति सामान्येऽपि सादृश्यप्रतीतिर्यथा गोत्वं नित्यं तथाऽश्वत्वमपि तस्य च भावरूपत्वान्नाभावेऽन्तर्भावः। मैवम् तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यं यथा चन्द्रभिन्नत्वे सति चन्द्रगताल्हादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यम्। भेदस्या-न्योन्याभावेऽन्तर्भावात् धर्मस्य च विशेषणीभूतगुणक्रियारूपत्वात् सादृश्यं न पदार्थान्तरम्।

## द्रव्यत्वजातिं साधय।

ननु द्रव्यत्व जातौ किं मानं प्रत्यक्षेण घृतजतुप्रभृतिषु द्रव्यत्वाग्रहाद्र जतादिष्वेव द्रव्यत्वग्रहाच्चेतिचेन्नानुमानेन तत्सिद्धेः तथाहि-समवाय सम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिता तादात्म्यसम्बन्धा-वच्छिन्ना या कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् घटगतकार्यतानिरूपितदण्डगतकारणतावत्। या या कारणता सा सा किञ्चिद्धर्मावच्छिन्ना निरवच्छिन्नायाः कारणताया असम्भ-वात्। इत्थञ्च समवायसम्बन्धावच्छिन्न कार्यत्वावच्छिन्नकार्यता-

निरूपिता तादात्म्यसम्बन्धावच्छिन्ना या द्रव्यनिष्ठा कारणता सा येन धर्मेणावच्छिद्यते स धर्म एव द्रव्यत्वरूपा जातिः । अत्र कार्यत्वकुक्षौ यावत्कार्यप्रवेशेनगौरवात् कार्यत्वस्य प्रध्वंसाभावेऽपि सत्त्वात्तत्र च समवायसम्बन्धावच्छिन्नकार्यताया असम्भवात् । संयोगस्य समवायिकारणतावच्छेदकतया तत्सिद्धिः । अनुमानञ्च-समवायसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्नसंयोगनिष्ठकार्यतानिरूपितेत्यादि पूर्ववज्ज्ञेयम् । येषांमतेविभुद्वयसंयोगोऽस्ति तेषांमते संयोगत्वावच्छिन्नकार्यताया अप्रसिद्धत्वाद्विभागीयसमवायिकारणतावच्छेदकतया द्रव्यत्वसिद्धिः । समवायसम्बन्धावच्छिन्न विभागत्वावच्छिन्न विभागनिष्ठकार्यतानिरूपितेत्यादिकमनुमानं पूर्ववज्ज्ञेयम् ।

## तमसोऽतिरिक्तद्रव्यत्वमस्ति नवा ? नास्तिचेत्कथम्?

ननु कथं नवैव द्रव्याणि तमसोऽप्यतिरिक्तद्रव्यत्वात् गुणक्रियाश्रयत्वं द्रव्यत्वमिति द्रव्यलक्षणं तमस्यपि सङ्गच्छते । "नीलं-तमश्चलती" त्यस्यां प्रतीतौ नीलं गुणश्चलनं क्रिया तमसिवर्तते । न च तस्य नवद्रव्यान्तर्भावो गन्धशून्यत्वान्न पृथिवी नीलरूपवत्वाच्च न जलादिकम् । तत्प्रत्यक्षे चालोकनिरपेक्षं चक्षुः कारणमितिचेन्न आवश्यकतेजोऽभावेनैवोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात् रूपवत्ताप्रतीतिस्त्वालोकापसारणोपाधिकी भ्रान्तिरेव । यदि तमसोऽतिरिक्त द्रव्यत्वं स्यात्तर्हि परमिदं तमोऽपरमिदं तम इति रीत्याऽनन्तावयवादिकल्पनागौरवं स्यात् ।

### अयमत्र संग्रहः

तमः खलु चलं नीलं परापरविभागवत् ।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्योभेत्तुमर्हति ॥

आलोकाभाव एवेदं तमो द्रव्यं न तु स्वयम् ।
नीलक्रियाप्रतीतिस्तु भ्रान्तिरेवेतिमन्यताम् ॥

## सपदकृत्यं जातेर्लक्षणं लिखत ।

"नित्यत्वे सत्यनेकसमवेतत्वम्" इति जातेर्लक्षणम् । यथा घटत्वादिकम् । तद्धि नित्यं सदनेकेषु घटादिषु समवायेन विद्यते । अनेकसमवेतत्वं संयोगादीनामपि विद्यते । संयोगो गुणो गुण-गुणिनोश्च समवायः । तस्य चानेकगतत्वं तत्रातिव्याप्तिवारणाय नित्यत्वेसति । नित्यत्वे सति समवेतत्वं गगनपरिमाणादीना-मपि विद्यतेऽत उक्तमनेकेति । नित्यत्वे सत्यनेकवृत्तित्व-मत्यन्ताभावेऽप्यस्ति तस्मादुक्तंसमवेतत्वम् । अभावस्तु स्वरूप-सम्बन्धेन वर्तते न तु समवायेन तस्मान्न दोषः ।

## के जातिबाधकाः ? सोदाहरणं व्याख्यायन्ताम् ।

जातिबाधकत्वं नाम जातिजातित्वान्यतरप्रकारकज्ञानप्रति-बन्धकज्ञानविषयत्वम् । तच्च षण्णामस्ति व्यक्त्यभेदः तुल्यत्वम्, सङ्करः, अनवस्थितिः, रूपहानिः असम्बन्धः, या व्यक्तिरेका भवति तत्र न जातिर्यथाऽऽकाशे आकाशत्वं न जातिः । स्वभिन्नजाति-समनियतत्वं तुल्यत्वम् । घटे घटत्वं कलशे कलशत्वं पृथङ्न जाति-द्वयं समनियतत्वात् । परस्परात्यन्ताभावसमानाधिकरणयोर्धर्म-योरेकत्र समावेशः सङ्करः । क्षित्यादि पञ्चके भूतत्वमस्ति । आकाश रहित मनोयुक्तक्षित्यादिचतुष्टये मूर्तत्वमुभयोः समावेशः क्षित्यादि-चतुष्टये तस्माद् भूतत्वं मूर्तत्वञ्च जातिर्नास्ति । अप्रामाणिकानन्त पदार्थकल्पनयाऽविश्रान्तिरनवस्थितिः । सामान्ये सामान्यत्वं तत्र सामान्यत्वत्वमित्यनवस्थाभिया सामान्यत्वं न जातिः । स्वरूप विनाशः रूपहानिः । विशेषे विशेषत्वजातिस्वीकारे तस्य जाति-

मुखेन भेदकत्वे प्राप्ते तस्य स्वतोभेदकत्वस्वरूपस्य विनाशः स्यादिति विशेषत्वं न जातिः।

असम्बन्धः=समवायसम्बन्धाभावः। अतः समवायेऽभावे च समवायत्वमभावत्वञ्च न जातिः।

## समवायं साधयत।

प्राचीनमते इह कपाले घटसमवाय इति प्रतीत्या समवायस्य प्रत्यक्षता। नवीनमते तु तत्रानुमितिः। तथाहि—

गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषयका विशिष्टबुद्धित्वात् दण्डी पुरुष इति विशिष्टबुद्धिवत्। यथा दण्डी पुरुष इति विशिष्टबुद्धिः संयोगसम्बन्धं विषयीकरोति तथैव "नीलो घटः" "गतिमान् यज्ञदत्तः" इयमपि विशिष्टबुद्धिः कञ्चित् सम्बन्धं विषयीकरिष्यति। स च न संयोगः द्रव्यद्रव्ययोरेव संयोग इति नियमात्। इत्थञ्च संयोगादीनां बाधात् समवायसिद्धिः। न च स्वरूपसम्बन्धेन सिद्धसाधनं समवायसाधने प्रवृत्तानां नैयायिकानां "विनायकं प्रकुर्वाणो रचयामास वानरमि" त्युक्त्यनुसारमर्थान्तरं वा जातमिति वाच्यम्, अनन्तस्वरूप कल्पनेगौरवाल्लाघवादेकः समवायः सिध्यति। न च समवायस्यैकत्वात् वायौ स्पर्शसमवायस्य सत्त्वात् रूपवत्ताबुद्धिप्रसंग इति वाच्यम्, वायौ रूपसमवायसत्त्वेऽपि वायौ रूपाभावान्न रूपवत्ताबुद्धिप्रसंगः। अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रिया क्रियावतोर्नित्यद्रव्यविशेषयोश्च यः सम्बन्धः स समवायः। मुख्यसम्बन्धत्वे सति नित्यत्वं समवायत्वमिति तल्लक्षणम्।

## अभावानां कुतो न वैशिष्ट्यं सम्बन्धान्तरम्?

ननु विशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषयेत्युक्तम्।

भवति घटाभाववद् भूतलमियमपि विशिष्टबुद्धिस्तया अभावानां वैशिष्ट्यं सम्बन्धान्तरं कथं न सिध्यतीतिचेन्न वैशिष्ट्यं भवदभिमतं नित्यमनित्यं वा ? आद्ये घटाभाववति भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गो वैशिष्ट्यस्य नित्यत्वात् । अन्त्ये घटशून्ये देशेऽपि घटवत्ताबुद्धिप्रसङ्गः । अस्माकं मतेतु पाकरक्तता-दशायां श्यामरूपसमवाय सत्वेऽपि श्यामरूपस्य नष्टत्वान्न श्यामरूपवत्ताप्रतीतिः । युष्माकं मते तु यस्य घटात्यन्ताभावस्य वैशिष्ट्यं सोऽपि नित्यस्तस्मात् सुतरां घटाभावबुद्धिप्रसङ्गः । वैशिष्ट्यानित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तवैव गौरवमतो वैशिष्ट्यं न सम्बन्धान्तरम् । तस्मात तत्तत्कालिकं तत्तद्भूतलादिकमेव तत्तद् भावानां सम्बन्धः ।

**अभावस्य किं लक्षणम् ? कतिविधश्च सः ? सोदाहरणं प्रतिपादयत ।**

घटो नास्ति पटो नास्तीत्यादिनञ्जन्यप्रतीतिविषयत्वमभावत्वम् । अभावो द्विधा संसर्गाभावः, अन्योन्याभावश्च । अन्योन्याभावभिन्नाभावत्वं संसर्गाभावत्वम् । संसर्गाभावस्त्रिधा प्रागभावः, प्रध्वंसाभावः, अत्यन्ताभावश्च । विनाश्यभावत्वं प्रागभावत्वम् । यथा घटस्योत्पत्तेः पूर्वं मृत्तिकायां यो घटाभावः स घटोत्पत्त्यनन्तरं विनश्यतीति प्रागभावः । जन्याभावत्वं ध्वंसत्वम् । यथा ध्वस्तो घटो ध्वस्तः पट इत्यादि रूपः । त्रैकालिकसंसर्गावच्छिन्न प्रतियोगिताकोऽभावो अत्यन्ता भावः । त्रैकालिक संसर्गावच्छिन्ना प्रतियोगिता यस्यैवं भूतोऽभावः । त्रैकालिकोऽभाव इति तु सरलार्थः । यथा शशशृङ्गं नास्तीत्यादिकः । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावो-

ऽन्योन्याभावः। येन सम्बन्धेन यन्नास्तीत्युच्यमाने तन्निष्ठ-प्रतियोगितायां स सम्बन्धोऽवच्छेदकसम्बन्धो भवति। घटे पट-तादात्यं नास्तीत्यत्र तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताको यो घटे पटाभावः स एवान्योन्याभावः तादात्म्यमित्यस्याभेद इत्यर्थः। अतो घटो न पट इत्यन्योन्याभावः।

ननु यत्र भूतलादौघटादिकमपसारितं पुनरानीतञ्च तत्र कोऽभावः ? अत्र केचित्— यस्मिन् काले घटोऽस्ति तस्मिन् काले तदत्यन्ताभावो न शक्यतेवक्तुमत उत्पादविनाशशाली सामयिकापरनामा चतुर्थो-ऽयमभावः। वस्तुतस्त्वत्रात्यन्ताभाव एव घटकाले स्वरूपसम्बन्धा भावान्न तत्प्रतीतिः। प्राचीनमते प्रागभावप्रध्वंसाभावस्थले नात्य-न्ताभावः। यतोहि श्यामघटे रक्तो नास्ति रक्तघटे श्यामोनास्तीतिधीः प्रागभावं प्रध्वंसाभावञ्च विषयीकरोति नतु तदत्यन्ताभावम्। नवीनास्तु विरोधे मानाभावाद् ध्वंसादिकालेऽपि स्वीकुर्वतेऽत्यन्ता-भावम्।

## अभावानां कुतोनाधिकरणात्मकत्वमित्युपपाद्यताम्।

ननु भूतले घटाभाव इत्यत्र केवलभूतलातिरिक्तमभावो न किञ्चिदुपलभ्यते। तस्मादभावानामधिकरणरूपत्वं कथं न स्वीक्रि-यत इतिचेन्न, अनन्ताधिकरणकल्पनापेक्षयाऽतिरिक्तकल्पनाया एवोचितत्वात्। किञ्च-भिन्नयोरेवाधाराधेयभावो भवति नत्वभि-न्नयोरेवञ्च घटाभाववद् भूतलमिति प्रतीतिर्नसङ्गच्छते। अन्यच्च— अभावस्याधिकरणरूपताङ्गीकारेइह शब्दाभावः, इत्यादिप्रतीतिः कथं नाम सङ्गच्छेत श्रोत्रेण शब्दाभावाधिकरणस्याकाशस्याग्रहणात्। भवति च शब्दाभावस्य प्रत्यक्षं "येन येनेन्द्रियेण या या व्यक्ति-र्गृह्यते तद्गतगुणस्तन्निष्ठजातिस्तदभावश्च तेनैव गृह्यते" इति

नियमात्। एवं ज्ञानविशेषस्वरूपोऽभावः कालविशेषस्वारूपोऽभाव इत्यपि खण्डितमभावस्याप्रत्यक्षत्वापत्तेः।

"पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम्" व्याख्यायताम्।

पारिमाण्डल्यमणुपरिमाणमुच्यते। तच्च परमाणोर्द्व्यणुकस्य चास्ति तद्भिन्नानां कारणत्वं साधर्म्यम्।

यदि परमाणुपरिमाणं द्व्यणुकपरिमाणस्य जनकं स्यात्तर्हि परिमाणस्य स्वसमानजातीयस्वोत्कृष्टपरिमाणजनकत्वनियमादणुतरमेव जनयिष्यति। यथा कपालगतमहत्परिमाणं घटे महत्तरं परिमाणं जनयति तथैव परमाणुनिष्ठमणुपरिमाणं द्व्यणुकेऽणुतरं परिमाणं जनयिष्यति। इत्थमेव त्रसरेणुविषये बोध्यम्। त्रसरेणुपरिमाणम्प्रति द्व्यणुकपरिमाणस्य कारणत्वे जगत्प्रत्यक्षविलोपः स्यात्। यदाऽणुपरिमाणवतो परमाण्वादेरेव प्रत्यक्षं न भवति तदाऽणुतरपरिमाणवतो द्व्यणुकादेः प्रत्यक्षं भविष्यतीति तु दूरापेतम्।

द्व्यणुकादिपरिमाणम्प्रति किं कारणमिति चेत् परमाण्वादिगतसंख्यां विद्धि। एवं परममहत्परिमाणातीन्द्रियसामान्यविशेषाश्चापि न कुत्रापि कारणी भवन्ति। ननु परमाणुपरिमाणविषयकयोगिज्ञानम्प्रति विषयत्वेन परमाणुपरिमाणस्य कारणताऽऽयातीतिचेन्न योगिज्ञानम्प्रति विषयस्याकारणत्वात्। अङ्गीकारे च भविष्यति भूते च विषयाणामभावात् त्रैकालिकं योगिज्ञानं न स्यात्। न च परमाणुत्वेन सकलपरमाणुबोधम्प्रति परमाणुत्वस्य कारणत्वमायातीति वाच्यम्, ज्ञायमानसामान्यं न प्रत्यासत्तिरपि तु सामान्यविषयकं ज्ञानं तेनोक्तबोधम्प्रति परमाणुत्वज्ञानस्य कारणत्वं नतु परमाणुत्वस्य। ननु परमाणुपरिमाणस्य योगजप्रत्यक्षे जातिसति

सर्वे परमाणवः अणुपरिमाणवन्तः परमाणुत्वादित्यस्यामनुमितौ पुनरपि परमाणुत्वस्य कारणत्वमायातीतिचेन्न ज्ञायमानलिंगं नानुमितिकरणमपि तु लिंगज्ञानमनुमितिकरणं तेनोक्तानुमितौ परमाणुत्वज्ञानस्यैव कारणत्वं न त्वणुपरमाणुत्वस्य । मानसप्रत्यक्ष आत्ममहत्त्वं कारणमतो महत्त्वं कालादेर्बोध्यम् । तस्यापि न कारणत्वमित्यन्ये तन्न ज्ञानातिरिक्तम्प्रत्येवाकारणताया आचार्यैरुक्तत्वात् ।

**कारणस्य किं लक्षणम् ? कतिविधश्च तत् ? सप्रपंचं-निरूपयत ।**

अन्यथासिद्धिशून्यत्वे सति कार्यनियतपूर्ववृत्तिकारणम् । तत् त्रिविधम्—समवायि—असमवायि—निमित्तञ्च । यत्र समवायेन कार्यमुत्पद्यते तत् समवायिकारणम् । यथा—घटम्प्रति कपालम् । कार्यैकार्थकारणैकार्थान्यतरप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं कारणं ज्ञानादिभिन्नमसमवायिकारणम् । कार्येण घटेन सह कारणस्य कपालसंयोगस्यैकस्मिन्नर्थे कपाले प्रत्यासत्तिरस्ति । कपालसंयोगघटयोः कपाले सहावस्थानमित्यर्थः । कारणेन घटेन सह कपाले प्रत्यासन्नं कपालरूपं घटरूपस्यासमवायिकारणम् । तत्र स्वगतरूपम्प्रति समवायिकारणं घटस्तेन सह कपालरूपस्यासमवायिकारणस्यैकस्मिन् कपाले प्रत्यासत्तिः । समवायिकारणासमवायिकारणाभ्यां भिन्नं कारणं निमित्तकारणम् । यथा घटम्प्रति दण्डचक्रसलिलकुलालादिकम् ।

**केऽन्यथासिद्धाः ? सलक्षणं सोदाहरणं प्रतिपादयत ।**

अन्यथासिद्धाः पञ्च भवन्ति । अन्यथाऽन्यप्रकारेणसिद्धाश्चरितार्था इत्यन्वर्थसंज्ञेयम् । तथाहि १. यत् कार्यम्प्रति कारणस्य पूर्व-

वृत्तिता येन रूपेण गृह्यते तत्कार्यम्प्रतितद्रूपमन्यथासिद्धम्। यथा घटम्प्रति दण्डत्वम्। २—यस्य स्वातन्त्र्येणान्वयव्यतिरेकौन गृह्येते कारणमादाय तु गृह्येते तदन्यथासिद्धम्। यथा घटम्प्रति दण्ड-रूपम्। ३—अन्यम्प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यम्प्रति पूर्व-वृत्तित्वं गृह्यते तदन्यथासिद्धम्। यथा घटम्प्रत्याकाशम्। तस्य शब्दम्प्रतिपूर्ववृत्तित्वं गृहीत्वैव घटम्प्रति पूर्ववृत्तित्वं गृह्यते। ४—जनकम्प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यम्प्रति पूर्ववृत्तित्वं गृह्यते तदन्यथासिद्धम्। यथा घटम्प्रति कुलालपिता। ५—अवश्य-क्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवे तद्भिन्नं सर्वमन्यथासिद्धम्। यथा घटम्प्रति गर्दभादिकम्।

नच दण्डत्वादिकं कारणमस्तु दण्डश्चान्यथासिद्धो भवत्विति वाच्यम्, दण्डस्यस्वजन्यभ्रमिवत्तासम्बन्धेन दण्डत्वस्य तु स्वाश्रय जन्यभ्रमिवत्तासम्बन्धेनेति दण्डत्वकारणतायां गौरवात्।

**"अथाकाशशरीरिणाम्। अव्याप्यवृत्तिःक्षणिकोविशेष-गुण इष्यते"। व्याख्यायताम्।**

आकाशस्यात्मनः परमात्मनश्चाव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वञ्च साधर्म्यमिति कारिकार्थः। तथाहि—आकाशे विशेषगुणः शब्दोऽस्ति स च यदाऽऽकाशे घण्टाद्यवच्छे-देनोत्पद्यते तदा घटाद्यवच्छेदेन तदभावोऽप्यस्त्येव तस्माद्व्याप्यवृत्तिः शब्दः। शब्दः प्रथमक्षण उत्पद्यते द्वितीयस्मिँस्तिष्ठति तृतीयस्मिन् विनश्यति योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वात्। क्षणिकत्वं नाम तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम्। इत्थं शब्दो-ऽव्याप्यवृत्तिः क्षणिकश्चेति वोध्यम्। एवमात्मनि विशेषगुणो ज्ञानमप्यव्याप्यवृत्तिः क्षणिकश्च तच्छरीरावच्छिन्नात्मनि समुत्पद्यते

घटावच्छिन्नात्मनि तु नास्तीत्यव्याप्यवृत्तित्वम्। पूर्वोक्तप्रकारेण ज्ञानस्य क्षणिकत्वमपि बोध्यम्। पृथिव्यामव्याप्यवृत्तिः संयोगादिरस्ति तस्माद् विशेषगुण इति। विशेष गुणः पृथिव्यां रूपादिरस्ति तस्मादव्याप्यवृत्तीत्युक्तम्। न च रूपादीनां कदाचित् तृतीयक्षणे नाशसम्भवात् क्षणिकविशेषगुणवत्त्वं क्षित्यादावतिव्याप्तमिति वाच्यम्, त्रिक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वमिति विवक्षितत्वात्। एवंविधविशेषगुणः शब्दो ज्ञानादि र्वा भवितुमर्हति न तु रूपं रूपत्वस्य त्रिक्षणवृत्तिरूपे सत्त्वात्तस्य निरुक्तजातिमत्त्वाभावात्। परममहत्त्वस्य द्वित्वादीनाञ्च तादृश गुणत्वात् तन्निरासार्थं विशेषेति। परमात्मनः साधर्म्यग्रहणाय जन्येति। तदग्रहणे तु जन्येति न देयं द्वेषत्वादिकमादायात्मनि लक्षणसमन्वयः।

## अवयविसिद्धिः प्रदर्श्यताम्।

ननु नास्त्यवयवी परमाणुपुञ्जेनैव कार्यसिद्धेः। एकस्य परमाणोरप्रत्यक्षत्वेऽपि दूरस्थकेशसमूहवत् तत्समूहस्य प्रत्यक्षत्वं युक्तमेव। एको महान् धान्यराशिरितिवदेको घट इति ज्ञानं युक्तमेवेति चेन्न दृष्टान्तवैषम्यात् दूरस्थकेशे तु ग्रहण योग्यताऽस्ति सन्निधाने एकस्यापि केशस्य ग्रहणात्। परमाणौ तु न ग्रहणयोग्यताऽतः परमाणुपुञ्जरूपस्य घटपटादेः प्रत्यक्षत्वं नोपपद्यते न चादृश्यपरमाणुपुञ्जाद् दृश्यपरमाणुपुञ्जोत्पत्ते र्न प्रत्यक्षे विरोध इति वाच्यम्, अदृश्यस्य दृश्योपादानत्वासम्भवात्। इतरथा चक्षुरुष्मादिसन्ततेरपि कदाचिद् दृश्यत्वप्रसङ्गात्। अतिदग्धतैलादौ तु दृश्यदहनत्रयेणैव स्थूलदहनोत्पत्तिर्भवति नत्वदृश्यदहनेन। नचादृश्यद्व्यणुकेन कथ

दृश्यत्रसरेणोत्पत्तिरिति वाच्यम्, यतो दृश्यत्वमदृश्यत्वं वा स्वाभाविकं न ब्रूमोऽपितु महत्त्वादिकारणसत्त्वे दृश्यत्वं तदभावे चादृश्यत्वम् । त्रसरेणौ महत्त्वादिसत्त्वाद् दृश्यत्वं द्व्यणुके तद्भावाददृश्यत्वम् । तस्मादकामेनापि बौद्धेनावयवीस्वीकार्यो-ऽन्यथा जगत्प्रत्यक्षविलोपः स्यात् ।

परमाणुं साधयत ।

उक्तरीत्याऽवयविसिद्धौ तदवयवधारायाः क्वचिद् विश्रामः स्वीकार्योऽन्यथा मेरुसर्षपयोः साम्यप्रसङ्गः । यत्र च विश्रामः स एव परमाणुः । महत्परिमाणतारतम्यस्य गगनादाविवाणुपरि-माणतारतम्यस्यापि क्वचिद्विश्रान्तत्वात् । स च परमाणु नित्यो-ऽन्यथाऽसमवेतभावकार्योत्पत्तिप्रसङ्गः । न च त्रसरेणावेव विश्रामोऽस्त्विति वाच्यम, त्रसरेणुः सावयवः चाक्षुपद्रव्यत्वात घटवदित्यनुमानेन तस्य सावयवत्वात् ।

नापि द्व्यणुके विश्रामः द्व्यणुकाः सावयवाः महदारम्भ-कत्वात् कपालवत् । इत्यनुमानेन तस्यापि सावयवत्वात् । न चैवं परमाणोरप्यवयवाः सिध्येयुरिति वाच्यम , अनवस्थाभयेन तदसिद्धेः ।

## किं नाम शरीरत्वम् ? कथञ्च नृसिंहशरीरे लक्षण-समन्वयः ?

शरीरत्वं न जातिः पृथिवीत्वादिना साङ्कर्यात् । पृथिवीत्वं त्यक्त्वा शरीरत्वं जलीयशरीरेषु शरीरत्वं त्यक्त्वा पृथिवीत्वं घटादौ द्वयोः समावेशो मनुष्यशरीरे । चेष्टावदन्त्यावयवि-वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं शरीरत्वमिति शरीरलक्षणम् ।



मनुष्यत्वनरत्वादिकमादाय [illegible] सर्वत्र लक्षणसमन्वयः ।

ननु नृसिंहस्यैकव्यक्तित्वान्न नृसिंहत्वं जातिः। नापि देवत्वं जातिस्तैजसत्वादिना साङ्कर्यात्। देवत्वं त्यक्त्वा तैजसत्वं सुवर्णादौ तैजसत्वं त्यक्त्वा देवत्वं जलीयदेवेषूभयोः समावेशस्तैजसदेवेषु। मैवम् कल्पभेदेन नृसिंहस्यानेकत्वान्नृसिंहत्वजातिमादाय लक्षणसमन्वयः। "युगे युगे व्यतीतानि तन्नामानि भवन्ति चे" ति शास्त्रान्नृसिंहबहुत्वम्।

## घ्राणेन्द्रियस्य पार्थिवत्वं साधयत।

प्रत्यक्षे घ्राणेन्द्रिये गन्धोपलब्ध्यभावात् तस्य पार्थिवत्वं न ज्ञायतेऽतोऽनुमानमुच्यते "घ्राणेन्द्रियं पार्थिवं द्रव्यत्वे सति रूपादिषु गन्धस्यैव व्यञ्जकत्वात् वायूपनीतसुरभिभागवत्"। तदित्थं न कुत्राप्यतिव्याप्तिः। वायूपनीतसुरभिभागस्य केवलगन्धव्यञ्जकत्वात् समन्वयः। नवशरावगन्धव्यञ्जकजलस्य सक्तुरसस्याप्यभिव्यञ्जकत्वाद् हेतोरनैकान्तिकत्वं नास्ति। द्रव्यत्वे सतीति विशेषणात् घ्राणेन्द्रियसन्निकर्षे न व्यभिचारः।

## जलत्वजातिं साधयत।

जन्यस्नेहसमवायिकारणतावच्छेदकतया जन्यजलत्वं सिध्यति तथाचानुमानम् — समवायसम्बन्धावच्छिन्नजन्यस्नेहत्वावच्छिन्न जन्यस्नेहनिष्ठकार्यतानिरूपिता तादात्म्यसम्बन्धावच्छिन्ना या कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्। या या कारणता सा सा किञ्चिद्धर्मावच्छिन्ना निरवच्छिन्नायाः कारणताया असम्भवात्। घटगतकार्यतानिरूपितकपालगतकारणतावत्। इत्थं जन्यस्नेहसमवायिकारणतावच्छेदकतया जन्यजलत्वं सिध्यति। ननु जन्यस्नेहः परमाणौ नास्ति तत्र जलत्वं कथं स्यादित्यस्य [illegible]

भाव नियम इतिचेन्न जन्यजलत्वावच्छिन्नजन्यजलनिष्ठा या कार्यता तादृशकार्यता निरूपिता या जलनिष्ठा कारणता तदवच्छेदकतया जलत्वसिद्धेः। एवं जलत्वजातिः परमाणावप्यस्ति। एव जन्यशीत-स्पर्शस्य सांसिद्धिकद्रवत्वस्य वा समवायिकारणतावच्छेदकतया तत्सिद्धि र्ज्ञेया।

## जले माधुर्ये किं मानम् ?

ननु जले मधुरो रसोऽस्तीत्यत्र किं प्रमाणम् ? यदि नारिकेल-जलादौमाधुर्यमुपलभ्यत इत्युच्यते तर्हि जम्बीररसादौ सुतरामम्लता तेनाम्लवत्त्वं कथं न स्वीक्रियत इतिचेन्न जले मधुर एव रसो हरीतक्यादि तदीयव्यञ्जकं यदा भवति तदा प्रत्यक्षी भवति। जिह्वा-स्थं मलं जलस्य माधुर्यमभिभवति यदा तु हरीतक्यादिना तन्मलं शोध्यते तदा माधुर्यं स्पष्टं प्रतीयत इत्याशयः। न च जलोष्मसं-योगात् माधुर्यस्योत्पत्तिरिति वाच्यम्, कल्पनागौरवात्। अम्लादिनिष्ठजन्यतानिरूपितजनकता तु पृथिव्यामेवास्ति न तु जले। आश्रयवशादम्लताप्रतीति र्यथा जले गन्धाभावेऽपि चम्पक-तैलादौ गन्धोपलब्धिः।

## सुवर्णस्य तैजसत्वं साधयत।

ननु सुवर्णं तैजसमित्यत्र किं प्रमाणमितिचेन्नानुमानेन तत्सिद्धेः। सुवर्णं तैजसमत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानजन्य-द्रवत्वात्। यन्नैवं तन्नैवं यथा पृथिवी। पृथिवीद्रवस्य जलीय-द्रवस्यं चाग्निनाश्यत्वात् सुवर्णस्य तैजसत्वमेव। अपरे— अत्यन्ताग्निसंयोगे पीतिमगुरुत्वाश्रयः विजातीयरूपप्रतिबन्धक-द्रवद्रव्यसंयुक्तः अत्यन्तानलसंयोगेऽपि विजातीयरूपानाश्रयत्वात् जलमध्यस्थपीतपटवत्। इत्यनुमानेन सुवर्णस्य तैजसत्वं साध-

यन्ति । द्वयोरनुमानयोः सारः-द्रवन्ति पृथिवीजलतेजांसि त्रीणि सन्ति । तत्र पार्थिवजलीयद्रवोऽग्निना यदि संयुज्यते तर्हि विनष्टो भवति रूपं वा परिवर्तते । सुवर्णस्य द्रवस्तु न तादृशो न विनश्यति नापि परिवर्तते तस्य रूपमतः सुवर्णं न पार्थिवमपि तु तैजसमिति सिद्धम् ।

आकाशं साधयत ।

नन्वाकाशसद्भावे किं प्रमाणमिति चेन्न प्रत्यक्षाभावेऽप्यनुमानप्रमाणसत्त्वात् । तथाहि—"शब्दो विशेषगुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवत्" । इत्यनुमानेन शब्दस्य विशेषगुणत्वं सिध्यति । "शब्दो द्रव्यसमवेतो गुणत्वात् संयोगवत्" इत्यनुमानेन द्रव्यसमवेतत्वं सिध्यति । इदानीं भवति जिज्ञासा कस्मिन् द्रव्ये स समवायेन तिष्ठति । "शब्दो न स्पर्शवतां विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सति अकारणगुणपूर्वकप्रत्यक्षत्वात् सुखवत्" पाकजरूपादौ व्यभिचारवारणाय सत्यन्तम् । पटरूपादौ व्यभिचारवारणाय अकारणगुणपूर्वकेति । जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति । नापि शब्दः दिक्कालमनसां गुणः विशेषगुणत्वात् रूपादिवत् । नात्मविशेषगुणो बहिरिन्द्रियग्राह्यत्वात् स्पर्शवत् । एव पृथिव्यप्तेजोवायुदिक्कालात्ममनसां शब्दो गुणो नास्तीति सिद्धेऽस्ति कस्यचित् यस्य गुणोऽस्ति तदेव द्रव्यं गगनमित्युच्यते । इदमत्रानुमानम्—"शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात् यन्नैव तन्नैवं यथा रूपादि" ।

आत्मसद्भावे किं प्रमाणम् ? शरीरेन्द्रियमनसां च कथं नात्मत्वम् ?

यद्यप्यात्मनि 'अहं जाने, अहं सुखी' इत्यादिकं मानसं प्रत्यक्षमस्ति तथापि विप्रतिपन्नपुरुष एवं स्वीकर्तुं न शक्नोति तस्मादनुमानमुच्यते "इन्द्रियाणि सकर्तृकाणि करणत्वात् कुठारादिवत्" यत् यत् करणं तत्तत् सकर्तृकमितिव्याप्तेः। छिदादिकरणानां कुठारादीनां कर्तारमन्तरेण फलं नोपलभ्यते तथैवेन्द्रियाण्यपि करणानि सन्ति तान्यपि कर्तारमन्तरा फलं जनयितुं नालम्। यस्तेषां कर्ता स एवात्मा। अयं शरीरस्य साक्षादिन्द्रियाणाञ्च परम्परया चैतन्यसम्पादकः।

ननु शरीरमेवात्मा न तु भिन्नः कश्चिन्मृते पुरुषे प्राणाभावेन चैतन्याभावे तु न दोषो नैयायिकमतेऽपि मुक्तात्मनि शरीराभावे ज्ञानाद्यभावसत्त्वादितिचेन्न, शरीरात्मवादे बाल्ये विलोकितस्य स्थाविरे स्मरणानुपपत्तिः शरीरावयवानां वृद्धिह्रासैरुत्पादविनाशशालित्वात्। पूर्वशरीरोत्पन्नसंस्कारेण द्वितीयशरीरे संस्कार उत्पाद्यत इति स्वीकारे तु संस्काराणामनन्तत्वाद् गौरवं स्फुटमेव।

अन्यच्च—प्रवृत्तिम्प्रतीष्टसाधनताज्ञानं कारणमित्यस्तिनियमस्तथा सति बालकस्य स्तन्यपाने प्रवृत्तिर्न स्यादिष्टसाधनताज्ञानाभावात्। नैयायिकमते तु जन्मान्तरानुभूतेष्टसाधनताज्ञानात् प्रवृत्तिः। नच जन्मान्तरानुभूतमन्यदपि स्मर्यतामिति वाच्यम्, स्मारकाभावात्। अत्र त्वगतिकगत्या जीवनादृष्टमेव स्मारकम्। इत्थञ्च पूर्वजन्मन्यपि ततः प्राक्तनस्यैवं क्रमेणात्मनोऽनादित्वं सिध्यति। अनादिभावस्य नाशासम्भवान्नित्यत्वम्।

यदि त्विन्द्रियमात्मेत्युच्यते तदेन्द्रियस्य विनाशानन्तरं स्मरणं न स्यादनुभवितुरभावात् येनानुभूयते तेनैव स्मर्यतेऽन्यथा-तिप्रसङ्गात् मैत्रेण स्मरणप्रसङ्गः।

ननु मन आत्मेत्येव स्वीक्रियतामिति चेन्न यथा बाह्यज्ञानसाधनानि चक्षुरादीनि तथैवान्तर्ज्ञानसाधनं मनोऽस्ति । साधनं कर्ता न भवितुमर्हति किञ्च—प्रत्यक्षे महत्त्वं कारणं मनसश्चाणुत्वमस्ति तदित्थमाधारप्रत्यक्षाभावे तद्गतस्य ज्ञानसुखादेरप्यप्रत्यक्षता स्यात् तस्मान्न मन आत्मेति सिद्धम् ।

## आत्मविषये बौद्धमतमुपपाद्य खण्डयत ।

ननु क्षणिकविज्ञानमेवात्मा तस्य प्रकाशरूपत्वाच्चेतनत्वम् । ज्ञानसुखादिकं तु तस्यैवाकारविशेषस्तस्य सद्रूपत्वात् क्षणिकत्वं यत् सत् तत् क्षणिकमिति नियमात् ।

ननु विज्ञानस्य क्षणिकत्वे स्मरणं कथं स्यादिति चेन्न यथा कस्तूरीगन्ध एकवस्त्रनिहितो वस्त्रान्तरेषु संक्रामति तथैव पूर्वविज्ञानजनितसंस्कारा उत्तरोत्तरविज्ञाने संक्रामन्ति । सुषुप्तावप्यालयविज्ञानधाराऽस्त्येवेति स्मरणादिकं सूपपन्नमिति बौद्धमतम् । तदयुक्तम् क्षणिकविज्ञानं यत्किञ्चिद्विषयकं यावत्किञ्चिद्विषयकं वा ? आद्येघटविषयकं पटविषयकं वेत्यत्र विनिगमकं नास्ति । अन्त्ये सर्वे सर्वज्ञाः स्युः । सुषुप्तावपि विषयावभासप्रसङ्गश्च स्याज्ज्ञानस्य सविषयत्वात् । किञ्च—क्षणिकविज्ञानस्य स्वप्रकाशत्वे किं प्रमाणम् ? प्रमाणाभावेऽपि स्वप्रकाशत्वं यदि स्वीक्रियते तर्हि घटादयश्चेतना इत्यपि स्वीक्रियताम् । इष्टापत्तिश्चेत्तर्हि घटस्य ज्ञानमिति विज्ञानाद् भिन्नत्वेन जायमाना प्रतीतिर्न स्यात् । आकारविशेष एवायं घटादिर्विज्ञानस्येतिचेत्, तर्हि किमयमाकारो विज्ञानादतिरिच्यते नवा ? आद्येऽपसिद्धान्तापत्तिः । अन्त्ये 'इमे नीलपीते, इत्याकारके ज्ञाने नीलाकारोऽपि पीताकारः स्यात् स्वरूपतो विज्ञानस्याविशेषात् । अपोहरूपो नीलत्वादिर्विज्ञानधर्म इति चेन्न, एकस्मिन् धर्मिणि विरुद्धधर्मद्वयसमावेशासम्भवात् । इतरथा

विरोधावधारणमेव दुष्करम्। अन्यच्च यथा गन्धः संक्रामति न तथा वासनासंक्रमो भवितुमर्हति। उत्तरस्मिन्नुत्पत्तिरेव संक्रम इतिचेत्तर्हि क उत्पादकः? चितामुत्पादकत्वे त्वानन्त्यप्रसङ्गः। क्षणिकविज्ञानेऽतिशयस्तु प्रमाणाभावान्न स्वीक्रियते। बीजादौ सहकारिधरणीसलिलादिसन्निधानासन्निधानाभ्यामेव कार्यसिद्धौ कुर्वद्रूपत्वाकल्पनाच्च। अतः क्षणिकविज्ञानं नात्मेति सिद्धम्।

अद्वैतवादमुपपाद्य निराकुरुत।

क्षणिकविज्ञानयुक्त्याऽऽत्मनो ज्ञानरूपता वेदान्तसम्मतनित्य विज्ञानेऽपि न तिष्ठति। 'सत्यं ज्ञानमनन्तं ब्रह्म' इयं श्रुतिर्ब्रह्मपरा न तु जीवपरा। जीवब्रह्मणोरभेदे 'अयं दुःखी' अयं बद्धोऽयं मुक्त इत्यादिप्रतीति र्न सङ्गच्छते। तत्त्वमसीत्यादिवाक्यन्तु सर्वथाऽभेदे नोपासितव्यमित्याशयपरं यथा 'मनोब्रह्मेत्युपासीत' इत्यादि। अत एव "सर्व एवात्मनि समर्पिताः" इति सङ्गच्छते। न च मोक्षदशायामभेदो जायत इति वाच्यम, भेदस्य नित्यत्वेन नाशासम्भवात्। भेदनाशेऽपि व्यक्तिद्वयं स्थास्यत्येव। न च द्वित्वमपि नश्यतामिति वाच्यम्, यथा निर्धर्मके ब्रह्मणि वेदान्तिना सत्यस्वरूपं तदिति स्वीकृतं तथैव नैयायिकै द्वित्वाभावेऽपि व्यक्तिद्वयात्मकौ ताविति वक्तुं शक्यत एव। ननु सत्यत्वं न धर्मोऽपितु मिथ्यात्वाभावो ऽधिकरणात्मक इति चेदेकत्वाभावो व्यक्तिद्वयात्मको द्वित्वमप्युच्यताम्। यद्यपि जीव एकत्वं ब्रह्मण्यप्येकत्वं किन्तु द्वयोरेकत्वं नास्ति पृथिवीजलयो र्न गन्ध इतिवदुभयं नैकमित्यस्य सर्वजनसिद्धत्वात्। अभेदबोधकवेदस्तु निर्दुःखत्वादिना साम्यं प्रतिपादयति नत्वभेदं यथा संपदाधिक्ये पुरोहितोऽयं राजा संवृत्तः। अत-एव "निरञ्जनः परमं साम्यमुपैति" इति श्रूयते।

## ईश्वरो ज्ञानसुखात्मा नवा ?

ननु मा भूज्जीवस्य ज्ञानरूपतेश्वरस्य तु स्यादेवोक्तश्रुतेरिति चेन्न ज्ञानाद्याश्रय एवेश्वरः 'यः सर्वज्ञः स सर्ववित्' इत्यादिश्रुत्यनुरोधात्। 'नित्यं विज्ञानमानन्दं ब्रह्मे' त्यादावानन्दमित्यस्यानन्दवदित्यर्थः। अश आदित्वान्मत्वर्थीयोऽच्प्रत्ययः। अन्यथा "घञबन्तः" इति लिङ्गानुशासनात् पुंस्त्वापत्तिः आनन्दशब्दोऽपि दुःखाभावे व्यवह्रियते भाराद्यपगमे सुखी संवृत्तोऽहमित्यत्र दुःखाभावे सुखित्वप्रत्ययात्। कामं भवतु परमात्मन्यानन्दो न तु परमात्माऽऽनन्दरूपः। असुखमिति श्रुतेः। बहुव्रीहिस्तु क्लिष्टकल्पनापत्तेर्द्वैतसाधनप्रकरणविरोधादानन्दमित्यत्र मत्वर्थीयाच्प्रत्ययविरोधाच्च न स्वीक्रियते। / न सुखस्वरूपमित्यर्थः।

## आत्मविषये सांख्यमतमुपपाद्य खण्डयत्।

सांख्यमते प्रकृतिः कर्त्री पुरुषस्तु पद्मपत्रमिव निर्लेपः किन्तु चेतनः। बुद्धौ चैतन्याभिमानोऽस्ति तच्चेतनमन्तरा न घटत इति पुरुषकल्पनम्। एतन्मते बुद्धिरुपलब्धिज्ञानानि भिन्नानि सन्ति न तु नैयायिकवत् "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" बुद्धिः प्रकृतेः प्रथमः परिणाम उच्यते। तस्या एवापरं नाम महत्तत्त्वमन्तःकरणमिति वा। अन्तःकरणरूपसरोवरस्य घटकेदारं प्राप्य घटाद्याकाराऽऽकारिता ज्ञानमित्युच्यते। ममेदं कर्तव्यमित्यत्रांशत्रयं विद्यते मदंशः पुरुषस्य सम्बन्धो बुद्धेः स्वच्छतया पुरुषप्रतिबिम्बरूपोऽतात्त्विको यथा दर्पणे मुखसम्बन्धः। इदमिति विषयसम्बन्धस्तात्त्विको निश्वासाभिहतदर्पणस्य मालिन्यवत्। कर्तव्यमिति व्यापारांशः। बुद्धि परिणामेन ज्ञानेन सह यः पुरुषस्य सम्बन्धः स [illegible] ...यथा दर्पणमालिन्येन मुखमा-

लिन्यमतात्त्विकं तथैव ज्ञानेन सह पुरुषसम्बन्धोऽप्यतात्त्विक एव। ज्ञानवत् सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा अपि बुद्धेरेव धर्माः 'अहं कर्ता' 'अहं सुखी' इति प्रतीतेः। नच बुद्धिश्चेतना परिणामित्वात् 'परिणामिनो हि सर्वे भावा ऋते चितिशक्ते' रितिसिद्धान्तात्। इति सांख्यमतं तन्न यत्र कृतिस्तत्रैवादृष्टं यत्रादृष्टं तत्रैव भोग इति एते यथैकाधिकरणास्तथैव चैतन्यमपि। ननु चेतनोऽहं करोमीत्यत्र चैतन्यं भ्रान्त्या प्रतीयत इति चेन्न कृत्यंशे भ्रान्तिः किं नेष्यते किञ्च-कर्तृचेतनयोर्भेदाङ्गीकारे बुद्धेर्नित्यत्वे मोक्षाभावप्रसङ्गस्तदनित्यत्वे तत्पूर्वमसंसारापत्तिः। नन्वचेतन-प्रकृतिजन्या बुद्धिरचेतनैव भवितुमर्हति तन्न प्रकृतिजन्या बुद्धिरित्यस्यासिद्धेःकर्ता जन्योऽस्तीत्यत्र प्रमाणं नास्ति। स्त-न्यपानप्रवृत्याऽऽत्मनोऽनादित्वमनादित्वाच्च नित्यत्वं सिध्यति तत् किं प्रकृत्यादिकल्पनेन। नच प्रकृतेः क्रियमाणानीति गीतावचन-विरोध इति वाच्यम्। प्रकृतेरदृष्टस्य गुणैरिच्छादिभिरिति विवक्षि-तत्वात्।

> अधिष्ठानं तथा कर्ता करणञ्च पृथग्विधम्।
> विविधाश्च पृथक् चेष्टा दैवञ्चैवात्र पञ्चमम्॥
> तत्रैवं सति कर्तारमात्मानं केवलं तु यः।
> पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः॥

इत्यादिवदता भगवता स्पष्टीकृतोऽयमुपरिष्टादाशयः।

## प्रत्यक्षस्य किं लक्षणम्? कतिविधञ्च तत्?

इन्द्रियजन्यं ज्ञानं प्रत्यक्षमिति लक्षणं सर्वेषां ज्ञानानां मनो रूपेन्द्रियजन्यत्वादतिव्याप्नोति। तत्परिहारार्थमिन्द्रियत्वेन रूपेण ज्ञाने सर्वेषाणां कारणत्वमिति विवक्षणीयम्। न चेदं

लक्षणमीश्वरप्रत्यक्षेऽव्याप्तं तत्प्रत्यक्षस्याजन्यत्वादिति वाच्यम्, इन्द्रियार्थसन्निकर्षोत्पन्नमित्यादिगौतमसूत्रे जन्यप्रत्यक्षस्यैव विवक्षितत्वात्। अथवा ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणम्। ज्ञानं न करणं यस्यैवं भूतं ज्ञानं प्रत्यक्षमित्यर्थः। अनुमितौ व्याप्तिज्ञानस्योपमितौ सादृश्यज्ञानस्य शाब्दबोधे पदज्ञानस्य करणत्वान्न कुत्रापि दोषः। तच्च घ्राणजरासनचाक्षुषस्पार्शनश्रौत्रमानसभेदात् षड्विधम्।

## द्रव्यप्रत्यक्षमात्रे किं कारणम्?

प्राचीनैर्द्रव्यमात्रप्रत्यक्षे रूपं कारणमिति स्वीकृतं नवीनैस्तु चाक्षुषप्रत्यक्षे रूपं कारणं स्पार्शनप्रत्यक्षे स्पर्शोऽन्वयव्यतिरेकात्। अथवा द्रव्यमात्रप्रत्यक्षे आत्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वं कारणम्। नच रूपकारणतायां लाघवमिति वाच्यम्, वायोरप्रत्यक्षत्वप्रसङ्गात्। ननु वायोरनुमिति र्भवति न तु प्रत्यक्षमत इष्टापत्तिरिति चेन्न उद्भूतस्पर्श एव कारणं किं न स्वीक्रियते। न च तथासति प्रभाया अप्रत्यक्षत्वप्रसङ्ग इतिवाच्यम्, तत्रापीष्टापत्तिः किं नेष्यते। इत्थञ्च यथा प्रभां पश्यामीति प्रत्यक्षं भवति तथैव वायुंस्पृशामीत्यपि प्रत्यक्षं भवत्येव तस्मान्न द्रव्यमात्रप्रत्यक्षे रूपं कारणम्।

## त्वचो योगो मनसा ज्ञानकारणम् इति कारिकांशो व्याख्यायताम्। अथवा ज्ञानसामान्ये किं कारणम्?

ननु ज्ञानसामान्ये किं कारणमिति चेत्त्वङ्मनःसंयोगः कारणमिति विद्धि। सुषुप्तिकाले पुरीतति नाड्यां मनः प्रविशति न तदा किञ्चिदपि ज्ञानं जायते। तेन प्रतीयते ज्ञानत्वावच्छिन्नम्प्रति त्वङ्मनःसंयोगः कारणम्। न च सुषुप्तिकालेऽनुभवसामग्र्यभावान्नानु

भवः। व्याप्तिज्ञानाभावान्नानुमितिः, सादृश्यज्ञानाभावान्नोपमितिः, पदज्ञानाभावान्नशाब्दबोधः। उद्बोधकाभावान्न न स्मरणमित्येवं कस्यापि ज्ञानस्य प्राप्तिरेव नास्ति, तर्हि, सुषुप्तौ ज्ञानाभावात् त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणमितिकथमिति वाच्यम्, सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्सम्बन्धेनात्मनश्च प्रत्यक्षत्वप्रसङ्गात्। तस्यातीन्द्रियत्वे निर्विकल्पकत्वे च प्रमाणाभावः। ननु निरुक्तकारणतास्वीकारे चाक्षुषादिप्रत्यक्षकाले विषयत्वक्संयोगस्य त्वङ्मनःसंयोगस्य च सत्त्वात् त्वाचप्रत्यक्षं स्यात्, परस्परप्रतिबन्धादिकमपि वा न स्यादिति चेन्न, चाक्षुषादिसामग्र्याः स्पर्शनादिप्रतिबन्धकत्वमनुभवानुरोधेन कल्पनात्। केचित्तुत्वगाख्यस्य चर्मणो मनसा संयोगो ज्ञानमात्रे कारणम्। चाक्षुषादिप्रत्यक्षकाले त्वङ्मनःसंयोगाभावान्न स्पार्शनप्रत्यक्षमिति वदन्ति।

### निर्विकल्पकज्ञानस्य किं स्वरूपम्? कथञ्च तस्यातीन्द्रियत्वम्?

प्रकारताविशेष्यतासंसर्गताशून्यं ज्ञानं निर्विकल्पकं भवति। चक्षुःसंयोगाद्यनन्तरं घट इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न सम्भवति पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात्। विशिष्टबुद्धित्वावच्छिन्नम्प्रति विशेषणज्ञानस्य कारणत्वात। बालमूकादिविज्ञानसदृशं तुरीयविषयताशालिज्ञानं निर्विकल्पकमुच्यते।

तस्यातीन्द्रियत्वञ्चेत्थम्—निर्विकल्पकज्ञानस्य प्रत्यक्षं न भवति, अनुव्यवसाये विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणत्वात्। अय भावः—ज्ञानस्य ज्ञानमनुव्यवसाय इत्युच्यते। अहं घटं ज्ञानामीत्याद्याकारकं ज्ञानमनुव्यवसाय इत्यर्थः। तत्रात्मनि ज्ञानं

विशेषणं ज्ञाने घटो विशेषणं घटे घटत्वं विशेषणम्। विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते तच्च प्रकृते घटत्वम्। विशेषणतावच्छेदकप्रकारकं ज्ञानमनुव्यवसाये कारणम् निर्विकल्पके च विशेषणज्ञानाभावात् न विशेषणतावच्छेदकप्रकारकज्ञानमस्ति। तस्मान्न निर्विकल्पकस्य प्रत्यक्षमर्थादनुव्यवसायः। अत एव तदतीन्द्रियमुच्यते।

## किं नामेन्द्रियत्वम् ?

इन्द्रियत्वं न जातिः पृथिवीत्वादिना साङ्कर्यप्रसङ्गात्। पृथिवीत्वं विहाय इन्द्रियत्वं चक्षुरादिषु वर्तते। इन्द्रियत्वं विहाय पृथिवीत्वं घटादौ, द्वयोः समावेशो घ्राणेन्द्रिये। "शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम्" इन्द्रियत्वम्। आत्मादावतिव्याप्तिवारणाय सत्यन्तम्। उद्भूतविशेषगुणस्य शब्दस्य श्रोत्रे सत्त्वाच्छब्देतरेति। विशेषगुणस्य रूपादेश्चक्षुरादावपि सत्त्वादुद्भूतेति। शब्देतरोद्भूतगुणः संयोगादिश्चक्षुरादावप्यस्ति अत उक्तं विशेषेति। कालादावतिव्याप्तिवारणाय विशेष्यदलम्। प्राचीनमत इन्द्रियावयववारणाय नवीनमते, कालगतरूपाभावप्रत्यक्षे सन्निकर्षावयवतया कारणीभूतचक्षुःसंयोगाश्रये कालादावतिव्याप्तिवारणाय विशेष्यदलम्। प्राचीनमत इन्द्रियावयववारणाय नवीनमते कालगतरूपाभावप्रत्यक्षे सन्निकर्षावयवतया कारणीभूतचक्षुःसंयोगाश्रये कालादावतिव्याप्तिवारणाय च मनः पदम्। ज्ञानकारणमित्यपि तद्वारणाय।

## के सन्निकर्षाः ? सोदाहरणं प्रतिपादयत।



सन्निकर्षपदेन व्यापार उच्यते स षड्विधो भवति। तथाहि-

संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्च। चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः। चक्षुर्घटयोर्द्रव्यत्वाद् द्रव्यद्रव्ययोश्च संयोगात्। घटरूपप्रत्यक्षजनने संयुक्तसमवायः सन्निकर्षः। चक्षुःसंयुक्तो घटस्तत्र समवायो रूपस्य। रूपत्वप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः। चक्षुःसंयुक्तो घटस्तत्र समवेतं रूपं तत्र समवायो रूपत्वस्य। एवं घ्राणादीनामपि बोध्यम्। श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः। कर्णशष्कुलीविवरावच्छिन्नमाकाशं श्रोत्रमुच्यते। शब्दश्च गुणोऽस्ति गुणगुणिनोश्च समवायो भवति। श्रोत्रेण शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः। श्रोत्रसमवेतः शब्दस्तत्र समवायः शब्दत्वस्य, अभावप्रत्यक्षे समवायप्रत्यक्षे च विशेषणविशेष्यभावसन्निकर्षः। विशेषणविशेष्यभावसन्निकर्ष एवेन्द्रियसम्बद्धविशेषणतेत्युच्यते। यथा—घटाभाववद् भूतलमित्यत्र चक्षुःसम्बद्धं भूतलं तत्र विशेषणता घटाभावस्य। एवं रूपसमवायवान् घटः, इत्यत्र समवायस्य विशेषणता बोध्या। यद्यपि संयुक्तविशेषणतासंयुक्तसमवेतविशेषणतादिरूपेण विशेषणता विविधा, तथापि विशेषणतात्वेन रूपेण सा एकैव गण्यते, अन्यथा षोढा सन्निकर्ष इति प्राचां प्रवादो व्याहन्येत।

पृथिवीपरमाणुनीले नीलत्वं पृथिवीत्वञ्च चक्षुषा कथं न गृह्यते ? वायुतदीयस्पर्शादौ च सत्तायाश्चाक्षुषं प्रत्यक्षं कथं न भवति ? किञ्च––यत्र मध्यावच्छेदेनालोकसंयोगश्चक्षुःसंयोगस्तु बाह्यावच्छेदेन तत्र घटस्य प्रत्यक्षं कथं न भवति ?

ननु नीलत्वजातिरेकैव पृथिवीपरमाणुनीले घटनीले च वर्तते । महत्त्वसम्बन्धो घटनीलमादाय वर्तते । उद्भूतरूपसम्बन्धस्तु घटनीलं परमाणुनीलञ्चादाय वर्तते । एवं पृथिवीपरमाणुनिष्ठपृथिवीत्वेऽपि परम्परासम्बन्धो भवति, तदित्थं पृथिवीपरमाणुनीले नीलत्वं पृथिवीत्वञ्च चक्षुषा कथं न गृह्यत इति चेन्न, यतो नहि चाक्षुषप्रत्यक्षे केवलं चक्षुःसंयोगः कारणमपि तु महत्त्वावच्छिन्नोद्भूतरूपावच्छिन्नालोकसंयोगावच्छिन्नचक्षुःसंयोगःकारणम् । तेन परमाणुनिष्ठनीले, वायौ तदीयस्पर्शादौ च विद्यमानायां सत्तायां बाह्यावच्छेदेन चक्षुःसंयोगे मध्यावच्छेदेनालोकसंयोगावच्छिन्ने घटे च न चाक्षुषप्रत्यक्षापत्तिरुपयुक्तकारणाभावात् ।

## अभावप्रत्यक्षे योग्यानुपलब्धेः कारणत्वं कथम् ?

अभावप्रत्यक्षे योग्यानुपलब्धिः कारणम् । प्रत्यक्षयोग्यस्य प्रतियोगिनो घटादेः अनुपलब्धिः—उपलम्भाभावः कारणमित्यर्थः । तत्र योग्यताप्यपेक्षिता, सा च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा । तदर्थश्च प्रतियोगिनोघटादेः सत्त्वप्रसक्त्या प्रसञ्जित उपलम्भरूपः प्रतियोगी यस्य सोऽभावप्रत्यक्षे हेतुरित्यर्थः । यत्रालोकादिकमस्ति तत्र यद्यत्र घटः स्यात्तर्हि,उपलभ्येतेत्यापादयितु शक्यते । तत्र घटाभावादिप्रत्यक्षं भवति । अन्धकारे तु नापादयितुं शक्यते । त्वाचप्रत्यक्षन्त्वन्धकारेऽपि भवत्येव । आलोकसंयोगं विनापि तस्यापादयितुं शक्यत्वात् । गुरुत्वादिकं यदयोग्यं तदभावस्तु न प्रत्यक्षस्तत्र गुरुत्वादिप्रत्यक्षस्यापादयितुमशक्यत्वात् । संसर्गाभावे सर्वत्र प्रतियोगिनो योग्यताऽपेक्षिता । अन्योन्याभावप्रत्यक्षे त्वधिकरणयोग्यताऽपेक्षिता । अतएव स्त-

म्भादौ पिशाचादिभेदोऽपि चक्षुपा गृह्यत एव ।

सामान्यलक्षणाया ज्ञानलक्षणायाश्च प्रत्यासत्तेः किं स्वरूपम् ?

लक्षणपदस्य यदि स्वरूपमर्थस्तर्हि सामान्यं लक्षणं स्वरूपं यस्याः सा सामान्यलक्षणा सामान्यस्वरूपेत्यर्थः। सामान्यञ्चेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतं बोध्यम् । इन्द्रियसम्बद्धो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं तत्र प्रकारीभूतं धूमत्वम् । धूमत्वेन रूपेण सकलधूमविषयकं ज्ञानं भवति । इन्द्रियसम्बद्धमित्येव कथने तु धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकं ज्ञानं न स्यात, धूमेन सहेन्द्रियसम्बन्धाभावात् । इदं बहिरिन्द्रियस्थले । मानसस्थले तु ज्ञानप्रकारीभूतं बोध्यम्। परन्तु लक्षणपदेन स्वरूपार्थग्रहणेऽनित्यसामान्ये दोषः । तच्चेत्थम्—यत्र भूतलं संयोगेन घटवदिति ज्ञानं तदनन्तरं तेनानित्यघटसामान्येन 'सर्वाणि भूतलानि संयोगेन घटवन्ति, इति ज्ञानं जायते। तत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणे जाते सामान्यलक्षणया सर्वेषां तद्घटवतां भानं न स्यात् । सामान्यस्य तदानीमभावात् । किञ्चेन्द्रियसम्बद्धविशेष्यकं घट इति ज्ञानं यत्र जातं तत्र परदिने इन्द्रियसम्बन्धं विनापि तादृशज्ञानप्रकारीभूतसामान्यस्य सत्त्वात्तादृशज्ञानं कुतो न जायते। तस्माल्लक्षणपदस्यात्र विषयोऽर्थः । सामान्यविपयकं ज्ञानं प्रत्यासत्तिर्नतु सामान्यम् । यस्य सौरभादेर्ज्ञानं तस्यैव सौरभादेर्व्यापारो ज्ञानलक्षणा । सुरभिचन्दनखण्डं पश्यामीत्यत्र चन्दनचन्दनत्वयोर्भानं

चक्षुषा जायते। किन्तु सौरभस्य सौरभत्वस्य वा भानं न केनापीन्द्रियेण सन्निकर्षाभावात्। अतः सौरभस्य सौरभत्वस्य वा भानं ज्ञानलक्षणयैव।

## सामान्यलक्षणाज्ञानलक्षणयोः को भेदः ? कथञ्च तयोः सार्थक्यम् ?

ननु पूर्वोक्तानुसारं द्वयोरपि प्रत्यासत्त्योर्ज्ञानरूपताऽऽस्यातीति न कोऽपि भेदस्तयोः, मैवम्—सामान्यलक्षणा तदाश्रयस्य ज्ञानं जनयति। ज्ञानलक्षणा तु यस्य सौरभादेर्ज्ञानं तस्यैव व्यापारो न तु तदाश्रयस्य। धूमत्वेन रूपेण सकलधूमविषयकं ज्ञानं जायतां तदर्थं सामान्यलक्षणा स्वीक्रियते। न च धूमत्वेन सकलधूमविषयकज्ञानाभावे का क्षतिरिति वाच्यम्, "धूमो वन्हिव्याप्यो न वा" अयं संशयो न स्यात् प्रत्यक्षधूमे वन्हिसम्बन्धस्य गृहीतत्वादन्यधूमस्य चानुपस्थितत्वात्। न च सामान्यलक्षणया प्रमेयत्वेन सकलप्रमेयज्ञाने जाते सार्वज्ञ्यापत्तिरिति वाच्यम्, विशेषतः सकलप्रमेयज्ञानाभावात्। सुरभिचन्दनमित्यत्र सौरभत्वज्ञानाय, तथा च यत्र धूमत्वेन धूलीपटलं ज्ञातं तत्र धूलीपटललस्यानुव्यवसाये भानाय ज्ञानलक्षणास्वीकार आवश्यकः। इत्थञ्च द्वयोरपि स्वीकार आवश्यक इति सिद्धम्।

॥ इति प्रत्यक्षखण्डं सम्पूर्णम् ॥

———

# अथानुमानखण्डम्

व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ।
अनुमायां ज्ञायमानं लिङ्गं तु करणं न हि ॥

व्याख्यायताम्

अनुमायाम्=अनुमितौ परामर्शो व्यापारः=तज्जन्यत्वे सति तज्जन्यजनको व्यापारः, परामर्शो व्याप्तिजन्योऽस्ति, व्याप्तिजन्या याऽनुमितिस्तस्या जनकोऽप्यस्ति । व्याप्तिज्ञानमनुमितौ कारणम् । पूर्वं पक्षधर्मताज्ञानमर्थात् पर्वतादौ धूमादिवृत्तिताज्ञानं, ततो धूमो वन्हिव्याप्य इत्येवं व्याप्तिस्मरणं, ततो वन्हिव्याप्यधूमवानयं पर्वत इति ज्ञानं तदेव परामर्श इत्युच्यते । ततः पर्वतो वन्हिमानिति ज्ञानं तदेवानुमितिरित्युच्यते । ज्ञायमानम्=वर्तमानकालीनज्ञानविषयतामापद्यमानम् । लिङ्गम=व्याप्तिबलेन लीनमर्थं गमयतीति लिङ्गं हेतुरित्यर्थः । अनुमितौ कारणं नास्ति, तथा सति त्रैकालिकमनुमानं न स्यात् । भवति च त्रिष्वपि कालेष्वमनुमानस्य सत्ता, तथाहि—पर्वतो वन्हिमानस्ति धूमात्, पर्वतो वन्हिमानासीत् भूतधूमात्, "पर्वतो वन्हिमान् भविष्यति भाविधूमात्" इत्थञ्च लिङ्गज्ञानमेव करणं न तु ज्ञायमानलिङ्गम् ।

## पूर्वपक्षखण्डनपुरःसरं परामर्शस्य लक्षणं लेख्यम् ।

साध्यनिरूपितव्याप्तिविशिष्टस्य हेतोःपक्षेण सह सम्बन्धावगाहि ज्ञानं परामर्शः । साध्यनिरूपितव्याप्तिनिष्ठप्रकारतानिरूपिता

या हेतुनिष्ठा प्रकारतातादृशप्रकारता निरूपिता या पक्षनिष्ठा विशेष्यता तादृशविशेष्यताशालिज्ञानमर्थात् सरलशब्देषु-व्याप्तिविशिष्टस्य हेतोः पक्षे ज्ञानं परामर्शः। ननु यत्र पर्वतोधूमवानितिप्रत्यक्षं ततो धूमो वन्हिव्याप्य इति स्मरणं तत्र ज्ञानद्वयादेवानुमितिदर्शन त् परामर्शो नानुमितौ सर्वत्र कारणमपि तु व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानं कारणमिति चेन्न, "अयमालोको वा धूमो वा" इत्याकारकसन्देहस्थले वन्हिव्याप्यवानयमित्याकारकज्ञानाद् व्याप्यतावच्छेदकाज्ञानेऽप्यनुमितिदर्शनात्। किञ्च-धूमवान् पर्वत इति ज्ञानादप्यनुमित्यापत्तिर्यतोहि, व्याप्त्याश्रयो व्याप्य उच्यते हेतुरित्यर्थः, प्रकृते च हेतुर्धूमो व्याप्यतावच्छेदकं धूमत्वम्, व्याप्यतावच्छेदकं प्रकारो विशेषणं यत्रैवंभूतं पक्षधर्मताज्ञानं पर्वतादौ धूमादिज्ञानमनुमितौ कारणमस्ति। यदि तु तत्पुषीयगृह्यमाणव्याप्यतावच्छेदकप्रकारक तत्पुरुषीयपक्षधर्मताज्ञानं तत्पुरुषीयानुमितौकारणमिति परिष्कारस्तदा, तत्तत्पुरुषाणामनुप्रवेशादनन्तकार्यकारणभावः। नैयायिकमते तु समवायसम्बन्धेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं समवायसम्बन्धेनानुमितिं जनयतीति नानन्तकार्यकारणभावः। न च व्याप्तिप्रकारकं यत्पक्षधर्मताज्ञानं पक्षधर्मताविषयकं यद् व्याप्तिप्रकारकं ज्ञानमिति विशेषणविशेष्यव्यत्यासेनोभयोः साम्यमिति वाच्यम्, त्वन्मते वन्हिव्याप्यो-धूम आलोकवान् पर्वत इति ज्ञानद्वयादनुमित्यापत्तेः। अतोऽकामेनापि मीमांसकेन विशिष्टज्ञानं स्वीकार्यं फलमुखगौरवस्यादोषत्वात्।

## पूर्वव्याप्तेः किं लक्षणम् ?

साध्यवदन्यनिरूपितवृत्तित्वाभावो व्याप्तिः। साधयितुं योग्यं साध्यं वन्हिप्रभृति, तत्साध्यमस्यास्तीति साध्यवान् तदन्यस्मिन्

निरूपितो यो वृत्तित्वाभावः स व्याप्तिः। यथा पर्वतो वह्निमान् धूमादित्यत्र साध्यवान् पर्वतादिस्तदन्यो जलह्रदादिस्तत्र वृत्तिर्मीन-शैवालादीनाम् वृत्तित्वाभावो धूमस्येति लक्षणसमन्वयः। अत्र येन सम्बन्धेन साध्यं तेनैव सम्बन्धेन साध्यवान् ग्राह्योऽन्यथा समवायेन वन्हिमान् वन्हेरवयवस्तदन्यो महानसादिस्तत्र धूमस्य वृत्तित्वमतोऽव्याप्तिः स्यात्। साध्यवदन्यपदेन साध्यवत्त्वावच्छिन्न-प्रतियोगिताकभेदवान् ग्राह्यः। इतरथा यत्किञ्चित्साध्यवदन्य-ग्रहणे पर्वतादावेवाव्याप्तिः स्यात्। साध्यवद्भिन्ने वृत्तित्त्वाभावो येन सम्बन्धेन हेतुतास्ति तेनैव ग्राह्यः। तेन साध्यवद्भिन्ने धूमा-वयवे धूमस्य समवायेन सत्त्वेपि न दोषः। साध्यवदन्यवृत्तित्वा-भावः साध्यवतो यावद्भिन्नेषु ग्राह्यस्तेन धूमवान् वन्हेरित्यत्रा-सद्धेतौ वन्हेर्जलह्रदादिवृत्तित्वाभावेऽपि नातिव्याप्तिः। न च "इदं द्रव्यत्ववत् गुणकर्मान्यविशिष्टसत्त्वात्" इत्यत्र विशिष्टं शुद्धान्ना-तिरिच्यत इति न्यायेन विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्यात् साध्यवद्भेदाधिकरणे गुणे कर्मणि च विशिष्टसत्ताया वृत्तित्वाद-व्याप्तिरिति वाच्यम्, हेतोर्वृत्तित्वाभावस्य हेतुतावच्छेदकरूपेण विवक्षणाद् दोषाभावात्। लक्षणाकारस्तु—साध्यतावच्छेदकसम्ब-न्धावच्छिन्नसाध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदाधिकरणत्वा-वच्छिन्नभेदाधिकरणनिरूपिता या हेतुतावच्छेदकसम्बन्धावच्छिन्ना वृत्तिता, तादृशवृत्तितानवच्छेदकहेतुतावच्छेदकधर्मवत्त्वमेव (हेतोः शिरसि साध्यस्य) व्याप्तिः।

**सिद्धान्तव्याप्त्यवतारे को हेतुरिति निर्दिश्य सिद्धान्त-व्याप्तेर्लक्षणं लेख्यम्।**



प्रागुक्तव्याप्तिलक्षणं 'इदं वाच्यं ज्ञेयत्वात्' इत्यादौ केवलान्वयिनि साध्यवदन्याभावादव्याप्तम्। किञ्च—'सत्तावान्

जाते" रित्यत्र साध्यवन्ति द्रव्यगुणकर्माणि तद्भेदाधिकरणं सामान्यादिस्तत्र हेतुतावच्छेदकसमवायसम्बन्धेन कस्यचिद् वृत्तिरेव नास्ति कुतो वृत्तित्वाभावस्तस्मादव्याप्तिः। अतः "हेत्वधिकरणवृत्त्यत्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः समन्वयस्तु हेत्वधिकरणे पर्वतादौ योऽत्यन्ताभावः घटाभावस्तस्य प्रतियोगी घटोऽप्रतियोगी वन्हिस्तेन सह धूमस्य सामानाधिकरण्यं भवत्येव। ननूक्तलक्षणस्य वह्निमान् धूमादित्यत्राव्याप्तिः—हेत्वधिकरणे पर्वते वन्हिसत्त्वेऽपि वन्हिघटोभयं नास्तीत्यत्राभावप्रतियोगी वह्निः स एव साध्योऽप्रतियोगी साध्यो नास्ति। एवं गुणवान द्रव्यत्वादित्यत्राव्याप्तिः। हेत्वधिकरणं श्वेतघटः तत्रवृत्त्यभावः रक्ताभावः प्रतियोगी रक्तरूपो गुणः स एव च साध्य इति चेत् सत्यम्, अत्र सामानाधिकरण्यं हेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यमिति विवक्षितम् तेन न कश्चिद् दोषः। पूर्वोदाहरणयोः प्रतियोगितावच्छेदकं वन्हिघटोभयत्वम् अनवच्छेदकं साध्यतावच्छेदकं वन्हित्वम्, एवं प्रतियोगितावच्छेदकं रक्तत्वम् अनवच्छेदकं साध्यतावच्छेदकं गुणत्वम्। किञ्च—हेत्वधिकरणं हेतुतावच्छेदकविशिष्टाधिकरणं ग्राह्यम्। तेन द्रव्यं विशिष्टसत्त्वादित्यत्र गुणनिष्ठाभावमादाय नाव्याप्तिः। गुणकर्मान्यत्वविशिष्टसत्तायाः शुद्धसत्तायाश्चैकत्वेऽपि गुणकर्मान्यत्वविशिष्टसत्तात्वेन हेतुतावच्छेदकेन सुतरां भिन्नत्वात्। हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणविवक्षणाद् वन्हिमान् धूमादित्यत्र समवायेन हेत्वधिकरणं धूमावयवमादाय नाव्याप्तिः। अभावश्च प्रतियोगिव्यधिकरणो बोध्यस्तेन वृक्षः कपिसंयोगी एतद्वृक्षत्वादित्यत्र साध्याभावमादाय नाव्याप्तिः। प्रतियोगिव्यधिकरणत्वञ्च प्रतियोग्यनधिकरणवृत्तित्वम्।

प्रतियोग्यनधिकरणत्वञ्च साध्यतावच्छेदकसम्बन्धेन यत् प्रतियोगितावच्छेदकावच्छिन्नाधिकरणं तद्भिन्नत्वम्। तेन घटो ज्ञानवान् द्रव्यत्वादित्यत्र द्रव्यत्वाधिकरणघटादेर्विषयतासम्बन्धेन ज्ञानाधिकरणत्वेऽपि नातिव्याप्तिः। घटो विशिष्टसत्तावान् जातेरित्यत्र जात्यधिकरणगुणादौ विशिष्टसत्ताभावप्रतियोगिशुद्धसत्ताधिकरणत्वेऽपि नातिव्याप्तिः। लक्षणाकारस्तु—साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणीभूतं हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नं यद् हेत्वधिकरणं तद्वृत्त्यभावीयप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति भवति। ननु कालो घटवान् कालपरिमाणादित्यत्राव्याप्तिर्महाकालस्य जगदाधारतया सर्वेषामभावानां कालिकसम्बन्धेन प्रतियोगिसमानाधिकरणत्वादिति चेन्न, महाकालभेदविशिष्टस्य घटाभावस्य प्रतियोगिव्यधिकरणत्वात्। अथवा—प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं व्यापकसामानाधिकरण्यञ्च व्याप्तिः। तेन कालो घटवानित्यत्र संयोगसम्बन्धेन यो घटाभावस्तत्प्रतियोगिनो घटस्यानधिकरणे हेत्वधिकरणे महाकाले वर्तमानः स एव संयोगेन घटाभावस्तस्य प्रतियोगितायां घटनिष्ठायां घटत्वावच्छिन्नत्वेऽपि कालिकसम्बन्धावच्छिन्नत्वं नास्त्यत एकसत्त्वे द्वयं नास्तीति प्रतीत्योभयाभावोऽतो नाव्याप्तिः। धूमवान् वन्हेरित्यादावतिव्याप्तिवारणाय सामान्यपदम्। न च प्रमेयवन्हिमान् धूमादित्यत्र 'सम्भवति लघुधर्मे गुरौ तदभाव इति नियमात् प्रमेयवन्हित्वस्य साध्यतावच्छेदकत्वाभावादवच्छेद-

काप्रसिद्धिनिबन्धनाऽव्याप्तिस्तदवस्थेति वाच्यम्, कम्बुग्रीवादिमान्नास्तीति प्रतीत्या कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताविषयीकरणेन गुरुधर्मस्याप्यवच्छेदकत्वस्वीकारात्।

**अभावश्च प्रतियोगिव्यधिकरणो बोध्य इत्यस्य क आशयः?**

अयमाशयः—हेत्वधिकरणवृत्त्यभावः प्रतियोगिसमानाधिकरणो नापेक्षितोऽन्यथा कपिसंयोगी एतद्वृक्षत्वादित्यत्र मूलावच्छेदेन कपिसंयोगाभावस्य सत्त्वादव्याप्तिः स्फुटैव। ननु प्रतियोगिव्यधिकरणपदेन भवता यदि प्रतियोग्यनधिकरणवृत्तित्वं विवक्षितम्, तर्हि निरुक्तस्थलेऽव्याप्तिस्तदवस्थैव। प्रतियोगिनः कपिसंयोगस्यानधिकरणे गुणादौ वर्तमानो योऽभावस्तस्यैव मूलावच्छेदेन वृक्षेपि सत्त्वात्। यदि तु प्रतियोग्यधिकरणावृत्तित्वं विवक्षितं तदा घटः संयोगी सत्त्वादित्यत्रासद्धेतौ सत्ताधिकरणे गुणादौ यः संयोगाभावस्तस्य प्रतियोग्यधिकरणद्रव्यवृत्तित्वादभावान्तरमादाय लक्षणघटनादतिव्याप्तिरिति चेन्न, प्रतियोगिव्यधिकरणाभावपदेन स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभाव इति विवक्षणात्। आद्यस्थले कपिसंयोगाभावस्य स्वप्रतियोग्यधिकरणीभूतहेत्वधिकरणवृत्तित्वान्नाव्याप्तिः। द्वितीये तु संयोगाभावस्य प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्तितया प्रतियोगितावच्छेदकस्यैव साध्यतावच्छेदकत्वान्नातिव्याप्तिः।

**प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित् प्रतियोगिनोऽधिकरणं प्रतियोगितावच्छेदकावच्छिन्नस्य तत्सामानस्य किं वा यत्किंचित्प्रतियोगितावच्छेदको यो धर्म-**

स्तद्धर्मावच्छिन्नानधिकरणं विवक्षितं पक्षत्रयं निरस्य सिद्धान्तः प्रतिपादनीयः ।

नन्वाद्ये कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिः । कपिसंयोगाभावस्य प्रतियोगितावच्छेदकावच्छिन्नो भूतलादिवृत्तिकपिसंयोगोऽपि भवति तदनधिकरणं वृक्षः । तत्प्रतियोगितावच्छेदकः यः कपिसंयोगत्वधर्मः स एव साध्यतावच्छेदक इत्यव्याप्तिः । द्वितीये तु "धूमाभाववान् वन्ह्यभावात्" इत्यत्राव्याप्तिः । साध्यतावच्छेदकस्वरूपसम्बन्धेन सर्वस्याप्यभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणत्वाद्विशिष्टस्य च शुद्धानतिरेकात् साध्याभावमादायाव्याप्तिः । तृतीये तु—आत्मा कपिसंयोगाभाववान् आत्मत्वादित्यत्राव्याप्तिः । आत्मवृत्तिकपिसंयोगाभावाभावः कपिसंयोगस्तस्य गुणत्वात् प्रतियोगितावच्छेदक गुणसामान्याभावत्वमपि तदवच्छिन्नानधिकरणत्वं हेत्वधिकरणस्यात्मनः । नैवम्—यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेत्वधिकरणस्य तादृशप्रतियोगितानवच्छेदकस्य साध्यतावच्छेदकस्य विवक्षितत्वात् ।

## सपदकृत्यं पक्षतालक्षणं लिखत

सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता । सिषाधयिषा=साधयितुमिच्छा तस्याः विरहः=अभावः तेन विशिष्टा=युक्ता या सिद्धिः—साध्यनिश्चयः तस्या अभावः । सिषाधयिषामात्रं साध्यसन्देहश्च न पक्षता विनापि सिषाधयिषां, विनापि साध्यसन्देहं गगनं मेघवत् घनगर्जनादित्यत्रानुमितिदर्शनात् । यत्र सिद्धिरस्ति सिषाधयिषा च नास्ति तत्रानुमितिर्भवति, विशेषणाभावप्रयुक्तविशि-

ष्टाभावस्य सत्त्वात्। यत्र सिद्धिर्नास्ति, सिषाधयिषा चास्ति, तत्रोभयाभावसत्त्वादनुमितिः यत्रोभयोरभावस्तत्र विशेष्याभावप्रयुक्तः विशिष्टाभावसत्त्वादनुमितिः। यत्र सिद्धिरस्ति सिषाधयिषा च नास्ति, तत्र न पक्षता सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वात्। न च सिद्धिपरामर्शसिषाधयिषाणां योग्यविभुविशेषगुणत्वात् तादृशगुणानाञ्च यौगपद्यनिषेधात् सिद्धिकाले सिषाधयिषायाः प्राप्तिरेव नास्ति, तत्कथं सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणमिति वाच्यम्, यत्र वन्हिव्याप्यधूमवान् पर्वतो वन्हिमानिति प्रत्यक्षं स्मरणं वा ततः सिषाधयिषा तत्र पक्षतासिद्धये तद्विशेषणस्यावश्यकत्वात्।

"यादृशयादृशसिषाधयिषासत्त्वे" इत्यादिग्रन्थांशस्य क आशयः ?

यादृशसिषाधयिषासिद्धिसत्त्वे यद्धेतुकानुमितिर्भवति तादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकानुमितौ पक्षता। यथा पर्वते वन्हिप्रत्यक्षे धूमेन वन्हिविषयकं ज्ञानं पर्वते जायतामित्यस्यां सिषाधयिषायामनुमितिर्भवत्येव। यत्किञ्चिज्ज्ञानं मे जायतामितीच्छायां नानुमितिः। एवमेव वन्हिव्याप्यधूमवान् पर्वत इति परामर्शे जाते आलोकेन हेतुना वन्हिमनुमिनुयामितीच्छायां नानुमितिः।

सिद्ध्यनुमित्योः प्रतिबध्यप्रतिबन्धकभावः कीदृशः ?

सिद्ध्यनुमित्योः समानप्रकारकत्वे समानविशेष्यकत्वे प्रतिबध्यप्रतिबन्धकभावो नान्यथाऽतः पर्वतो वन्हिमानिति सिद्धिसत्त्वे

पाषाणमयो वन्हिमानित्यनुमितिर्न प्रतिबध्यते । किञ्च पक्षैकदेशानुमितिम्प्रति पक्षैकदेशसिद्धिः सकलपक्षसिद्धिर्वा प्रतिबन्धिका सकलपक्षानुमितिम्प्रति तु सकलपक्षसिद्धिरेव प्रतिबन्धिका नतु पक्षैकदेशसिद्धिः ।

हेत्वाभासस्य सामान्यलक्षणं लिखत ?

हेत्वाभासशब्दः हेतुवदाभासते इति व्युत्पत्त्या सिध्यति अहेतुरपि यदि हेतुत्वेन प्रयुज्यते स हेत्वाभासः । अत्र हेतुर्दोषपूर्णो भवति । येषां मते सत्प्रतिपक्षादिदोषाणामनित्यत्वमस्ति तेषां मते यद्विषयकत्वेन ज्ञानस्यानुमितितत्करणान्यतरनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वं तत्त्वं हेत्वाभासत्वम् । यद्विषयकत्वेन व्यभिचारादिविषयकत्वेन ज्ञानस्य "पर्वतो वन्हिमान् प्रमेयत्वात्" इत्यादौ "अयं प्रमेयत्वहेतुर्व्यभिचारी" इत्याद्याकारकज्ञानस्य पर्वतो वन्हिमानित्यनुमितिम्प्रति यत् प्रतिबन्धकत्वं तद् हेत्वाभासत्वम् । दोषवत्त्वञ्च हेतौ स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन । नव्यानां मते तु यद्रूपावच्छिन्नविषयकत्वेन ज्ञानस्येत्यादि पूर्ववज्ज्ञेयम् । दोषवत्त्वञ्च हेतौ येन केनापि सम्बन्धेन । करणपदनिवेशेन व्यभिचारे नाव्याप्तिस्तस्यानुमितिप्रतिबन्धकत्वाभावेऽपि व्याप्तिज्ञानप्रतिबन्धकत्वात् ।

के हेत्वाभासाः ? सप्रपञ्चं लक्षणोदाहरणानि प्रतिपाद्य हेत्वाभासानां साधनाप्रसिद्ध्यादिभेदेनानन्तत्वात् पञ्चत्वकथनं कथमिति समर्थयत ।

सव्यभिचारविरुद्धासिद्धसत्प्रतिपक्षबाधिताः पञ्च हेत्वाभासाः सन्ति। सव्यभिचार एवानैकान्तिक इत्युच्यते। स त्रिविधः साधारणासाधारणानुपसंहारिभेदात्। साध्याभाववद्वृत्तिः साधारणः। यथा "पर्वतो वन्हिमान् प्रमेयत्वात्" इत्यत्र प्रमेयत्वहेतुः साध्याभाववति जलह्रदादावप्यस्तीति साधारणः। प्राचां मते सपक्षविपक्षव्यावृत्तोऽसाधारणः। यथा शब्दो नित्यः शब्दत्वादित्यत्र शब्दत्वहेतुः सपक्षे (नित्ये) गगनादौ विपक्षे (अनित्ये) घटादौ च नास्ति। नव्यमते साध्यासमानाधिकरणो हेतुरसाधारणः। केवलान्वयिसाध्यकत्वमनुपसंहारित्वम्, यथा—सर्वमभिधेयं प्रमेयत्वात्। साध्यव्यापकीभूताभावप्रतियोगी विरुद्धः। यथा—"शब्दो नित्यः कृतकत्वात्" इत्यत्र साध्ये नित्ये व्यापकीभूताभावः कृतकत्वाभावस्तस्य प्रतियोगी कृतकत्वमिति हेतुरस्ति। असिद्धस्त्रिविधः- आश्रयासिद्धः (१) स्वरूपासिद्धः (२) व्याप्यत्वासिद्धः (३)। पक्षे पक्षतावच्छेदकस्याभावः आश्रयासिद्धः। यथा गगनारविन्दं सुरभ्यरविन्दत्वात् सरोजारविन्दवत्। अत्रारविन्दे गगनीयत्वं पक्षतावच्छेदकं नास्ति तस्याप्रसिद्धत्वात। हेत्वभाववान् पक्षः स्वरूपासिद्धिर्यथा शब्दो गुणश्चाक्षुषत्वात्। अत्र शब्दात्मके पक्षे चाक्षुषत्वं नास्त्यपि तु श्रावणत्वम्। साध्याप्रसिद्धयाद्यन्यतमत्व व्याप्यत्वासिद्धिः। यथा—पर्वतः काञ्चनमयवन्हिमा नित्यादौ। केचित्तु पर्वतो वन्हिमान् नीलधूमादित्यत्र नीलधूमत्वस्य गुरुत्वेनानवच्छेदकत्वाद् व्याप्यत्वासिद्धिरिति वदन्ति। साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्षः। यथा—शब्दो नित्यः श्रावणत्वात् शब्दत्ववत्। शब्दोऽनित्यः कार्यत्वात् घटवत्। यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः। यथा वन्हिर-

नुष्णः द्रव्यत्वात् । अत्र स्पार्शनप्रत्यक्षेण वन्हेरुष्णत्वं निश्चीयते । यादृशपक्षसाध्यहेतौ यावन्तो दोषास्तावदन्यान्यत्वं तत्र हेत्वाभासत्वमितिरीत्या हेत्वाभासाः यद्यपि बहवस्तथापि पञ्चत्वकथनं तत्सम्भवस्थलाभिप्रायेण—अर्थात् वायुर्गन्धवान् स्नेहादित्यादौ पञ्चानामेव सम्भवात् ।

**सत्प्रतिपक्षविरुद्धयोः को भेद इति प्रतिपाद्य सत्प्रतिपक्षविषये रत्नकोषकारस्य किं मतमिति प्रतिपादयत खण्डयत च ।**

सत्प्रतिपक्षे द्वितीयहेतुः साध्याभावसाधको विरुद्धे तु हेतुरेव । साध्याभावसाधक एव साध्यसाधकत्वेनोपन्यस्त इत्यशक्तिविशेषोपस्थापकत्वाच्च विशेषः ।सत्प्रतिपक्षस्थले संशयाकारानुमितिदूषकताबीजं न त्वनुमितिप्रतिबन्धकता । समबलत्वे कोटिद्वयव्याप्यदर्शने संशयो भवत्येवेति रत्नकोषकृन्मतम् । तदयुक्तम्–तदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेषशाब्दबोधादेरनुदयात् लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतज्ज्ञानमात्रे तदभावव्याप्यवताज्ञानस्य प्रतिबन्धकता लाघवात् नतूपनीतभानविशेषे शब्दबोधे च पृथक् प्रतिबन्धकता गौरवादिति प्रतिबन्धकसत्त्वात् संशयानुमितेरसंभवात् ।

**बाधसत्प्रतिपक्षयोर्हेत्वाभासत्वं केन रूपेणास्तीति प्रतिपाद्य बाधस्य व्यभिचारस्वरूपासिद्धिभ्यां कथं न गतार्थतेति प्रतिपादयत ।**

तद्धर्मिकतदभावनिश्चयो लौकिकसन्निकर्षाजन्यदोषविशेषाजन्य-तद्धर्मिकतज्ज्ञानमात्रे प्रतिबन्धक इति रीत्या बाधसत्प्रतिपक्षयो-र्हेत्वाभासत्वमस्ति नतु संशयसाधारणं पक्षे साध्यतावच्छेदक-सम्बन्धेन साध्यवैशिष्ट्यावगाहि ज्ञानमनुमितिकारणं तद्विरोधि-तया हेत्वाभासत्वमिति युक्तम्। तथा सति पृथिवी इतरभेदवती गन्धवत्त्वादित्यादिस्थलेऽनुमित्यनुत्पत्तेः। ननु बाधस्थले हेतोः सद्भावे व्यभिचारः, असद्भावे स्वरूपासिद्धिरिति चेन्न बाधज्ञानस्य व्यभिचारज्ञानादेर्भेदात्। किञ्च यत्र परामर्शानन्तरं बाधबुद्धिस्तत्र व्यभिचारज्ञानस्याकिञ्चित्करत्वाद् बाधस्यानुमिति-प्रतिबन्धकत्वं वाच्यम्।

॥ इत्यनुमानखण्डं समाप्तम् ॥

# अथ शब्दखण्डम्

पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥

## व्याख्यायताम्

पदयोः पदानां वा ज्ञानं करणम्=व्यापारवदसाधारणं कारणम् पदार्थस्य धीः=ज्ञानम् शाब्दबोधे द्वारम्=व्यापारः, शक्तिः= "अस्मात् पदादयमर्थो बोद्धव्य" इति अथवा "इदं पदमिममर्थं बोधयतु" इत्याकारिकेश्वरेच्छा शक्तिस्तस्या धीः=ज्ञानम् सह-कारिणी भवति। एतस्य सर्वस्य फलं शाब्दबोधो भवति। शब्दः स्यायमितिशाब्दः स चासौ बोधः अर्थात् पदार्थानां परस्परसंस-र्गविषयकं ज्ञानं शाब्दबोधः। केचित्तु [illegible]

मन्यन्ते तन्न मौनिश्लोकादौ ज्ञायमानशब्दाभावेऽपि शाब्दबोधात्। पदार्थज्ञानस्य व्यापारत्वाभावे पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः। पदजन्यत्वमपि वृत्त्या बोध्यम् इतरथा घटादिपदात् समवायसम्बन्धेनाकाशस्मरणे जाते आकाशस्यापि शाब्दबोधापत्तेः। वृत्तिश्चात्र "अर्थस्मृत्यनुकूलः पदपदार्थयोः परस्परसम्बन्धः।" पदजन्यपदार्थोपस्थितौ शक्तिज्ञानस्योपयोगः। अतएव सत्यपि पदज्ञाने शक्तिग्रहाभावे तत्सम्बन्धेन पदार्थस्य स्मरणं न भवति। नव्यानां मते ईश्वरेच्छा न शक्तिः प्रत्युतेच्छैव। तेनाधुनिके सङ्केतेऽपि शक्तिरस्त्येव।

## शक्तिग्रहस्य कानि कारणानि?

शक्तिग्रहस्याष्टौ कारणानि सन्ति। तथाहि व्याकरणम्--तेन धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो भवति। २ उपमानम्—यथा गौस्तथा गवय इति रीत्या शक्तिग्रहं जनयति। ३ कोषः—"समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः" इत्येवमकूपारादीनां समुद्रादौ शक्तिग्रहमुत्पादयति। सति बाधके क्वचित्त्यज्यते कोशीयशक्तिग्रहः। यथा—"गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" परन्तु नीलादिपदस्य नीलरूपादावेव शक्तिर्गौरवात् नीलादिविशिष्टे तु लक्षणैव, न तूभयत्रापि शक्तिः। ४ आप्तवाक्यम्—अर्थस्य साक्षात्करणमाप्तिः तया प्रवर्तते इत्याप्तस्तस्य वाक्यम्। तेन कोकिलः पिकपदवाच्य इत्येवंरूपेण पिकादिपदे शक्तिग्रह उत्पाद्यते। ५ व्यवहारः—प्रयोजक वृद्धेन कथितं यद् गामानयेति प्रयोज्यवृद्धेन सास्नादिमान् पशुविशेष अनीतस्ततः प्रयोजकवृद्धेन गां नय अश्वमानयेत्युक्तमेवंविधात् व्यवहारात् पार्श्वस्थो बालो गवादिपदस्य सास्नादिमत्पिण्डादौ शक्तिं गृह्णाति। ६ वाक्यशेषः—यथा "यव

मयश्चरुर्भवति", म्लेच्छा यवपदं कङ्गौ प्रयुञ्जते । आर्यास्तु दीर्घशूकविशेषे । तत्र को यवपदस्यार्थ इत्यपेक्षायां "अथान्या ओषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ति" इति वाक्यशेषात् दीर्घशूके शक्तिर्निश्चीयते । ७ विवरणम्—तत्समानार्थकपदान्तरेण तदर्थकथनम्—यथात्रेर्नयनसमुत्थं ज्योतिरित्यस्य स्थाने चन्द्र इति, पचतीत्यस्य पाकं करोतीत्यादिव्याख्यया शक्तिग्रहः । ८ प्रसिद्धपदसान्निध्यादपि शक्तिग्रहो भवति । यथा—"इह सहकारतरौ मधुरं पिको रौति" अत्र सहकारपदसान्निध्यात् पिकपदस्य कोकिले शक्तिग्रहो भवति ।

## पदानां जातौ शक्तिः व्यक्तौ शक्तिराकृतौ वा शक्तिः ?

मीमांसकाः पदानां जातावेव शक्तिर्न तु व्यक्तौ इत्याचक्षते । तेषामयमभिप्रायः—एकस्यां व्यक्तौ शक्तिरुत सर्वासु ? आद्ये—व्यक्त्यन्तरस्य शक्तिमन्तरेण ग्रहणे शक्तिग्रहस्य शाब्दबोधम्प्रति कारणतायां सुतरां व्यभिचारः । अन्त्ये—आनन्त्यप्रसङ्गो व्यक्तीनामनन्त्वात् । तस्माज्जातौ शक्तिराक्षेपाच्च व्यक्तिभानं भवति । तन्नशक्तिम्विना व्यक्तिभानानुपपत्तेः । न च व्यक्तिशक्तावानन्त्यम्, सकलव्यक्तिष्वेकस्या एव शक्तेः स्वीकारात् । अनुगतधर्माभावस्तु न शङ्कनीयः, गोत्वादेरेवानुगमकत्वात् । किञ्च—यदि गोत्वे शक्तिस्तर्हि, गोत्वप्रकारकपदार्थस्मरणं शाब्दबोधश्च न स्यात् । यत्प्रकारको यद्विशेष्यकः शक्तिग्रहो भवति तत्प्रकारकस्तद्विशेष्यकः शाब्दबोधः पदार्थस्मरणञ्च भवतीति नियमात् । अन्यच्च—गोत्वे यदि शक्तिस्तर्हि, गोत्वत्वं शक्यतावच्छेदकं वाच्यं, तच्च गवितरासमवेतत्वे सति सकलगोसमवेतत्वम् । एवं सकलगोव्यक्तीनां शक्यतावच्छेदकेऽनुप्रवेशात् तथैव गौरवं तस्माज्जातौ न शक्तिः । आकृतौ अपि

शक्तिस्तथा सति मृण्मयगवादेरपि दानादिप्रसङ्गः। तस्माज्जात्याकृतिविशिष्टव्यक्तावेव शक्तिरिति नैयायिकसमयः।

कतिविधं पदम्?

पदं चतुर्विधं भवति—यौगिकं, रूढं, योगरूढं यौगिकरूढञ्च। यत्र प्रकृतिप्रत्ययाभ्यामर्थावगतिस्तद्यौगिकं यथा पाचकादिपदम्। पाचकपदे पच्प्रकृत्या, ण्वुल्प्रत्ययेन च पाककर्तेत्यर्थः प्रतीयते। यत्र समुदायशक्तिमात्रेण बोधस्तद्रूढं यथा गोमण्डलादिपदम्। अत्र गोपदस्य गच्छतीति गौरिति व्युत्पत्त्या गमनकर्ता नार्थोऽपि तु सास्नादिमत्पिण्डः। एवं मण्डलमित्यत्र मण्डं लातीत्यवयवार्थो नास्ति, अपितु समुदायशक्त्या सूर्यादिरोधके कुण्डलाकारे परिधौ शक्तं मण्डलपदम्। यत्रावयवशक्तिविषये समुदायशक्तिरप्यस्ति तद् योगरूढम्। यथा पङ्कजम्, पङ्काज्जायते इति व्युत्पत्त्या पङ्कजपदं पङ्कजनिकर्तृत्वरूपमर्थं बोधयति, समुदायशक्त्या च पद्मत्वेन रूपेण पद्मं बोधयति। नचावयवशक्त्यैव निर्वाह इति वाच्यम्, रूढिर्योगाद् बलीयसीति नियमेन योगार्थस्य बाधादिति प्राञ्चः। वस्तुतस्तु समुदायशक्त्युपस्थितपद्मेऽवयवार्थस्य सान्निध्यादन्वयो भवति। यत्र रूढ्यर्थस्य बाधःप्रतिसन्धीयते, तत्र लक्षणया कुमुदादेर्बोधः। स्थलपद्मे तु समुदायशक्त्यैव पद्मत्वेन रूपेण बोधः। यदि स्थलपङ्कजं विजातीयमित्यभ्युपगम्यते, तदा लक्षणयैव बोधः। यत्रावयवार्थः स्वतन्त्रोऽस्ति रूढ्यर्थश्चापि स्वतन्त्रोऽस्ति तद्यौगिकरूढं यथोद्भिदादिपदम्। उद्भिनत्ति पृथिवीमिति व्युत्पत्त्योद्भिदिति पदेन तरुगुल्मादिः प्रतीयते। रूढ्या तु यागविशेषः, "उद्भिदा यजेत पशुकामः" इत्यत्र श्रुतौ प्रसिद्धः।

आख्यातस्य कुत्र शक्तिः? संख्याभिधानयोग्यश्च कः?

वैयाकरणैराख्यातस्य कर्तरि शक्तिरुच्यते "लः कर्मणि च भावे चाकर्मकेभ्यः" इत्यनुशासनात्। चैत्रः पचतीत्यादौ कर्त्रा सह चैत्रस्य "सामान्यविशेषयोरभेदान्वयः" इति रीत्या अभेदान्वयो भवति। एवञ्च—एकत्वसंख्याश्रयचैत्राभिन्नकर्तृकवर्तमानकालिकपाकानुकूलो व्यापारः—इति व्यापारमुख्यविशेष्यकः शाब्दबोधो वैयाकरणानाम्। अस्मिन् मते शक्यतावच्छेदकं कर्तृत्वं तच्च कृतिरूपं कृतिश्च कर्तृभेदाद् भिन्नेति नानाशक्यतावच्छेदकस्वीकारे गौरवं भवति, तस्मात् कृतौ शक्तिः शक्यतावच्छेदकं कृतित्वं तच्च जातिरूपमेकमेवेति लाघवम्, कृतिश्चैत्रादौ प्रकारीभूय भासते। तेन "एकत्वाश्रयवर्तमानकालिकपाकानुकूलकृतिमांश्चैत्रः" इति प्रथमान्तमुख्यविशेष्यकशाब्दबोधो नैयायिकानाम्। नच कर्तुरनुक्तत्वात् चैत्रादिपदानन्तरं तृतीया स्यादिति वाच्यम्, यत्र कर्तृगता संख्यानुक्ता स्यात्तत्र तृतीया नतु कर्तुरनुक्तत्वे तृतीया। तिङ्तोपस्थाप्यासंख्यान्वयोग्यस्तु कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्यो भवति। आदिपदेन धात्वर्थातिरिक्ताविशेषणत्वमिति विवक्षित, तेन चैत्र इव मैत्रो गच्छतीत्यत्र चैत्रे एकत्वसंख्याया अन्वयो न भवति। स्तोकं पचतीत्यादौ स्तोकादेर्वारणाय द्वितीयदलम्। एवञ्चाख्यातस्य व्यापारेऽपि न शक्तिर्गौरवात्। रथो गच्छतीत्यादौ स्वव्यापारे आश्रयत्वे वा लक्षणा।

घटादिपदानां कार्यान्विते शक्तिः कार्यानन्विते वा शक्तिः? इति विविच्यताम्।

व्यवहारात् प्रतीयते ... कार्यान्विते एव शक्तिर्भवति। कार्यता-

बोधम्प्रति लिङ्गादीनां सामर्थ्यावधारणात्, नीलो घट इत्यादौ न शाब्दबोध इति मीमांसका वदन्ति। तन्न विचारसहम्—कार्यान्विते शक्तिग्रहेऽपि लाघवेन पश्चात्तस्य त्यागौचित्यात्। अत एव "चैत्र! पुत्रस्ते जातः कन्या ते गर्भिणी जाता" अत्र मुखप्रसादमुखमालिन्याभ्यां सुखदुःखे अनुमाय तत्कारणत्वेन परिशेषाच्छाब्दबोधं निर्णीय तद्धेतुतया तं शब्दमवधारयति। न च तत्र तं पश्येत्यादिशब्दान्तरमध्याहार्यम्, मानाभावात् चैत्र! पुत्रस्ते जातो मृतश्चेत्यादौ तदभावात्, इत्थञ्च लाघवात् कार्यान्विते शक्तिं परित्यज्य घटपदस्य केवलघटे शक्तिर्व्यवस्थाप्यते।

॥ इति शक्तिप्रकरणम् ॥

## केयं लक्षणा? कतिविधा च सा?

"लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः" शक्येन सम्बन्धः, यस्मिन्नर्थे पदस्य शक्तिर्भवति स शक्य इत्युच्यते, तेन सम्बन्धो लक्षणावृत्तिर्भवति। तत्र कारणन्तु तात्पर्यानुपपत्तिरस्ति। यथा गङ्गायां घोष इत्यत्र घोषः=आभीरपल्ली तन्निष्ठाधेयतानिरूपिताऽऽधारता गङ्गापदस्य शक्यार्थे भगीरथखातावच्छिन्न जलप्रवाहे न भवितुमर्हति तत्र वक्तुस्तात्पर्याभावात्। तेन गङ्गापदं स्वसामीप्यसम्बन्धिनं तटं लक्षयति। लक्षणात्रिविधा भवति—जहत्स्वार्था, अजहत्स्वार्था, लक्षितलक्षणा च जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था यथा गङ्गायां घोष इत्यत्र गङ्गापदं मुख्यार्थं प्रवाहरूपं जहाति। अजहत्स्वार्थाया उदाहरणन्तु "काकेभ्यो दधि रक्ष्यताम्" इत्यत्र काकपदस्य दध्युपघातकत्वावच्छिन्ने लक्षणा। यत्र तु शक्यार्थस्य परम्परासम्बन्धो भवति सा लक्षितलक्षणेत्युच्यते। यथा द्विरेफपदस्य द्वौ रेफौ यस्मिन् रेफद्वय-

सम्बन्धो भ्रमरपदे ज्ञायते। भ्रमरपदस्य च सम्बन्धो भ्रमरे ज्ञायते।

अन्वयानुपपत्तिर्लक्षणाबीजं तात्पर्यानुपपत्तिर्वा ? लाक्षणिकं पदं शाब्दबोधजनकं न वा ?

अन्वयानुपपत्ति र्न लक्षणाबीजं, तथा सति "यष्टीः प्रवेशय" "काकेभ्यो दधि रक्ष्यताम्" इत्यादावन्वयानुपपत्तेरभावात् लक्षणा न स्यात्। किञ्चान्वयानुपपत्तिपक्षे गङ्गापदस्य क्वचित्तीरे क्वचिद् घोषपदस्य मत्स्यादौ लक्षणेति नियमो न स्यात्। तस्मात्तात्पर्यानुपपत्तिरेव लक्षणाबीजम्। लाक्षणिकं पदं न शाब्दबोधजनकं लाक्षणिकार्थस्य शाब्दबोधे तु पदान्तरं कारणम्। शक्तिलक्षणान्यतरसम्बन्धेनेतरपदार्थान्वितस्वशक्यार्थशाब्दबोधम्प्रति पदानां सामर्थ्यावधारणात्।

वाक्ये लक्षणा भवति न वा ? कस्मिन् समासे लक्षणा भवति ? कस्मिंश्च न भवति ?

नैयायिकमते वाक्ये लक्षणा न भवति, यथा शक्तिः पदे एव तथैव लक्षणापि पदे एव। गम्भीरायां नद्यां घोष इत्यस्मिन् वाक्ये नदीपदस्य नदीतीरे लक्षणा गम्भीरपदार्थस्य नद्या सहाभेदान्वयः। यदि तु पदार्थः पदार्थेनान्वेतीत्याग्रहस्तर्हि, नदीपदस्य गम्भीरनदीतीरे लक्षणा गम्भीरपदं तु नदीपदमत्र गम्भीरनदीतीरं बोधयत्विति तात्पर्यबोधनार्थम्। उपकुम्भमित्याद्यव्ययीभावे परपदे तत्सम्बन्धिनि लक्षणा पूर्वपदार्थप्रधानतया चान्वयबोधः। कुम्भसम्बन्ध्यभिन्नं सामीप्यमिति। तत्पुरुषे तु प्रायेण पूर्वपदे

तत्सम्बन्धिनि लक्षणा तस्य च परपदार्थेन सहाभेदान्वयस्तेन राजपुरुष इत्यत्र राजसम्बन्ध्यभिन्नः पुरुष इति बोधो भवति। राजपदार्थस्य पुरुषपदार्थेन सह भेदान्वयस्तु न भवितुमर्हति,निपातातिरिक्तनामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वात्। अन्यथा राजा पुरुष इत्यत्रापि भेदान्वयबोधः स्यात्। घटो न पट इत्यत्र निपातस्य सत्त्वात् घटप्रतियोगिकभेदवान् पट इति बोधो भवत्येव। नीलोत्पलमित्यादौ नीलपदार्थस्य भेदेनान्वयात् भेदपदनिवेशः। लुप्तविभक्तेः स्मरणन्तु राजपुरुषादिपदे न कल्प्यम्, तद्विनापि बोधोदयात्। तत्पुरुषभेदे कर्मधारये लक्षणा नास्ति, अत एव 'निषादस्थपतिं याजये' दित्यत्र लाघवात् कर्मधारय आश्रीयते न तु तत्पुरुषः। न च निषादस्य वेदानधिकाराद् याजनासम्भव इति वाच्यम्, यागोपयोग्यध्ययनेतराध्ययनस्यैव निषेध इति कल्पनात्। अर्धपिप्पलीत्यादितत्पुरुषे तूपकुम्भवद्बह्यम्। बहुव्रीहौ परपदे लक्षणा पूर्वपदं तात्पर्यग्राहकम्। यथा चित्रगुरित्यत्र गोपदस्य चित्रगोस्वामिनि लक्षणा चित्रपदं तात्पर्यग्राहकम्। इतरेतरयोगद्वन्द्वे लक्षणा नास्ति। न च साहित्ये लक्षणा, "हिमविन्ध्यौ"इत्यादौ साहित्याभावात्। एकक्रियान्वयित्व साहित्यं धवखदिरौ छिन्धीत्यादौ वर्तते इत्यपि न वाच्यम्, धवखदिरौ पश्य छिन्धीत्यत्र तदभावात्। अतएव राजपुरोहितौ सायुज्यकामौ यजेतामित्यत्र लक्षणाभावाद् द्वन्द्व आश्रीयते न तु तत्पुरुषः। यत्र वास्तवभेदस्तत्र द्वन्द्वः। नीलघटयोरभेद इत्यत्र तु नीलपदस्य नीलत्वे घटपदस्य घटत्वे लक्षणा, अभेद इत्यस्य चाश्रयाभेद इत्यर्थान्न दोषः। समाहारद्वन्द्वे यदि समाहारोऽनुभूयते, तर्हि अहिनकुलमित्यादौ परपदे अहिनकुलसमाहारे लक्षणा पूर्वपदं तात्पर्यग्राहकम्। भेरीमृदङ्गं वाद-

येत्यादौ तु स्वाश्रयवृत्तित्वरूपपरम्परासम्बन्धेन वादनक्रियाया अन्वयात् न काचिदनुपपत्तिः। इत्थमेव पञ्चमूलीत्यादौ तत्पुरुषभेदे द्विगावपि बोध्यम्। नव्यानां मते तु द्वन्द्वश्चप्राणितूर्येत्यादिसूत्रकृतद्वन्द्वातिरिक्तद्वन्द्वे न समाहारानुभवः। एकशेषे पितरौ श्वशुरावित्यादौ पितृपदे जनकदम्पत्योर्लक्षणा श्वशुरपदे स्त्रीजनकदम्पत्योर्लक्षणा। घटा इत्यादौ तु न लक्षणा घटत्वेन रूपेण नानाघटोपस्थितिसंभवात। इत्थञ्च समासे न क्वापि शक्तिः पदशक्त्यैव निर्वाहात्।

॥ इति लक्षणाप्रकरणम् ॥

## शाब्दबोधस्य किं कारणम्? आसत्तेश्च किं लक्षणं किञ्च प्रयोजनम्?

आसत्तिर्योग्यताकांक्षातात्पर्यज्ञानानि शाब्दबोधस्य कारणानि सन्ति। आसत्तिः=पदानामविलम्बेनोच्चारणमर्थादन्वयिनोः पदयोर्व्यवधानाभावः। एकपदार्थेऽपरपदार्थसम्बन्धो योग्यता। येन पदेन विना यत्पदं शाब्दबोधं जनयितुं नालं तत्पदं तत्पदमाकांक्षते। वक्तुरिच्छा तात्पर्यमुच्यते। अद्योच्चारितस्य गामिति पदस्य परदिने उच्चारितेनानयेति पदेन नान्वयः, कालव्यवधानादासत्तेरभावात्। गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यत्र दैशिकव्यवधानादासत्तेरभावस्तस्मान्नान्वयः। वन्हिना सिञ्चतीत्यत्र योग्यताभावान्न शाब्दबोधः। पिण्डीमित्यत्र क्रियाया अभावान्न शाब्दबोधः। तात्पर्यज्ञानस्य कारणत्वात् सैन्धवपदेन क्वचिदश्वस्य क्वचिल्लवणस्य च बोधः।

ननु यत्र छत्री वासस्वी कुण्डली देवदत्त इत्याद्युक्तं तत्रोत्तरपदस्मरणेन पूर्वपदस्मरणस्य नाशादव्यवधानेन तदुत्तरपदस्मरणासम्भव इति चेन्न, प्रत्येकपदानुभवजन्यसंस्कारैरन्तिमस्य तावत्पदविषयस्मरणस्याव्यवधानेनोत्पत्तेः । नानासन्निकर्षैरेकप्रत्यक्षमिव नानासंस्कारैरेकस्य स्मरणं भवत्येव । कथमन्यथा नानावर्णैरेकपदस्मरणम् । इयाँस्तु विशेषः। केषांचिन्मते खले कपोतन्यायेनान्वयः । यथासस्यसमाहरणभूमौ शिशवो युवानो वृद्धाः कपोता एकदैव पतन्ति तथैव सर्वे पदार्था एकदैवानुयन्ति । केषाञ्चिन्मते—

यद् यदाकांक्षितं योग्यं सन्निधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते ॥

इति रीत्या क्रमेणान्वयः । इत्थञ्च खण्डवाक्यार्थबोधानन्तरं महावाक्यार्थबोधो भवति । अनेनैव निर्वाहे वैयाकरणाभिमतो वर्णाभिव्यङ्ग्यः पदस्फोटो नावश्यकः ।

पदाध्याहार आवश्यकोऽर्थाध्याहारो वेति निरूप्य योग्यताविषये नवीनानां किं मतमिति प्रतिपादयत ।

पदजन्यपदार्थोपस्थितिः शाब्दबोधे हेतुस्तेन पदाध्याहार एवोचितः । किञ्चार्थाध्याहारे पुष्पेभ्य इत्यत्र चतुर्थ्यनुपपत्तिः । नवीनानां मते शाब्दबोधम्प्रति योग्यताया ज्ञानं करणं नास्ति प्रत्युतायोग्यतानिश्चयः शाब्दबोधस्य प्रतिबन्धकः । अस्ति चायं नियमः—अनाहार्याप्रामाण्यज्ञानानास्कन्दिततद्धर्मिकतदभाववन्निश्चयः लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्मिकतज्ज्ञानमात्र-[illegible] तद्वत्ताबुद्धिम्प्रतिबध्नाति । कथं

म्प्रति प्रतिबन्धकः । [illegible]

भूतो निश्चयोऽप्रामाण्यज्ञानानास्कन्दितोऽर्थात् प्रमाणभूतः। पुनः कीदृशोऽनाहार्यः बाधकालीनेच्छाजन्यं ज्ञानमाहार्यं यथा शालिग्रामशिलायामीश्वरबुद्धिः। तद्भिन्नमनाहार्यम्। कथं भूतं तद्वत्ताज्ञानं प्रतिबध्नाति लौकिकसन्निकर्षाजन्यम् प्रत्यक्षभिन्नं ज्ञानमात्रं लौकिकसन्निकर्षाजन्यमुच्यते। दोषविशेषेण यदि जन्यं न भवेत्तस्माद् भूतलादौ घटाभावनिश्चये चक्षुषा घटवत्ताज्ञानं भवत्येव शंखे पीताभावनिश्चये पित्तादिदोषवशात् 'पीतः शङ्ख' इति ज्ञानं भवत्येव। इत्थमेवायोग्यतानिश्चयोऽपि शाब्दज्ञानस्य प्रतिबन्धको नियमस्य ज्ञानमात्रे सत्त्वात्।

**आकाङ्क्षायाः काऽऽवश्यकता ? तात्पर्यज्ञानस्य कारणत्वे वेदे कस्य तात्पर्यज्ञानमिति प्रतिपादयत।**

यद्यपि क्रियाकारकपदानां सन्निधानमासत्त्या चरितार्थं तथापि घटकर्मताबोधम्प्रति घटपदोत्तरद्वितीयारूपाकाङ्क्षाज्ञानं कारणम्। तेन घटः कर्मत्वमानयनं कृतिरित्यादौ न शाब्दबोधः। वेदस्थले तात्पर्यज्ञानार्थमीश्वरः कल्प्यते! नचाध्यापक तात्पर्यज्ञानं कारणमिति वाच्यम्, सर्गादावध्यापकाभावात्। ननु प्रलय एव नास्ति कुतः सर्गादिरिति चेन्न "जगत्प्रतिष्ठा देवर्षे! पृथिव्यप्सु प्रलीयते" इत्यादिना शास्त्रे तस्य प्रतिपादितत्वात्। शुकवाक्येऽपीश्वरीयतात्पर्यज्ञानं कारणं विसंवादिशुकवाक्ये तु शिक्षयितुरेव तात्पर्यज्ञानं कारणम्। न च संयोगादीनां तात्पर्यग्राहकाणां शाब्दबोधम्प्रति कारणत्वमिति वाच्यम्, लाघवात्तात्पर्यज्ञानस्यैव कारणत्वात्। केचित्तु क्वचिदेव नानार्थादौ तात्पर्यज्ञानं कारणं न तु सर्वत्र।

वेंदे तु लाघवज्ञानात्मकतर्कैः सहकृतेनानुमानेनार्थनिश्चयो यथा "कपिञ्जलानालभते" इत्यत्र कपिञ्जलपदं त्रित्वबोधकं पदोपस्थितिरूपलाघवादिति ।

॥ समाप्तं शब्दखण्डम् ॥

## स्मृतिम्प्रति किं कारणम् ?

स्मृतिम्प्रति पूर्वानुभवः कारणम। किन्तु तत्र केचिज्ज्ञानत्वेनैव पूर्वानुभवः कारणं नत्वनुभवत्वेन वैपरीत्ये सकृदनुभवस्थले स्मरणानन्तर स्मरणं न स्यात् समानप्रकारकस्मरणेन पूर्वसंस्कारस्य विनष्टत्वात्। ज्ञानत्वेन कारणत्वे तु स्मरणेन संस्कारान्तरद्वारा स्मरणान्तरं जन्यत इति प्राहुः। तन्न युक्तम् समूहालम्बनोत्तर सकलविषयकस्मरणाभावेऽपि घटपटादीनां क्रमिकस्मरणस्य दर्शनात्। तत्र फलं स्मरणं संस्कारनाशकं भवति। अतः क्रमिकस्मरणानुपपत्तिर्नास्ति। पुनः पुनः स्मरणे संस्काराणां दृढतरत्वोपपत्तिस्तु झटित्युद्बोधकसमवधानेन गतार्था। ननु ज्ञानत्वेनापि कारणता कथं न स्वीक्रियत इति चेन्न यदि विशेषधर्मेण कारणतायां व्यभिचारज्ञान न स्यात्तर्हि सामान्यधर्मोऽन्यथासिद्धो भवति। यथा दण्डस्य घटत्वावच्छिन्न म्प्रति कारणतायाः दण्डत्वेनोपपत्तौ द्रव्यत्वमन्यथासिद्धम्। नन्वान्तरालिकस्मरणान्यपि कदाचित् संस्कारान् नाशयेरन्-तथाविधस्थले पुनः स्मरणं संस्कारं विनैव स्यादिति व्यभिचारशङ्कया ज्ञानत्वेनैव पूर्वानुभवस्य कारणता स्वीकर्तव्येति चेन्न अनन्तसंस्काराणामुत्पत्तिनाशकल्पनापेक्षया चरमस्मरणस्यैव संस्कारनाशकत्वकल्पनेऽदोषात्।

## मनसः सद्भावे किं मानं कथञ्च तस्याणुत्वम् ?

"सुखदुःखाद्युपलब्धिसाधनमिन्द्रियं मनः" इदमत्रानुमानम्—

सुखादिसाक्षात्कारः सकरणकः जन्यसाक्षात्कारत्वात् चाक्षुषसाक्षात्कारवत्। इदमप्यत्रानुमानं भवति—सुखदुःखाद्यसमवायिकारणं संयोगः प्रतियोगित्वेन क्वचिदाश्रितः मुख्यसम्बन्धत्वात् समवायवत्। यच्च तादृशसंयोगाश्रयस्तदेव मनः। आत्मा मनसा युज्यते मन इन्द्रियेणेन्द्रियं विषयेण युज्यत इति नैयायिकसरणिः। यदि मनोऽणु न भवेत्तर्हि किं कारण यदेककालावच्छेदेन सर्वाणि ज्ञानानि न स्युः ? मनसोऽणुत्वे तु मन एककाले एकेनैवेन्द्रियेण युज्यतेऽत एकमेव ज्ञानं भवितुमुचितम्। अदृष्टादि तु बाधकत्वेन न स्वीकार्यं तथा सति चक्षुरादीनामप्यकल्पनापत्तेः। न च दीर्घ शष्कुलीभक्षणादौ ज्ञानानां यौगपद्यं दृश्यते इति वाच्यम्, उत्पलशतपत्रव्यतिभेदवद् यौगपद्यप्रत्ययस्य तत्र भ्रान्तत्वात्। ननु मनसः संकोचविकासशालितया यौगपद्यमयौगपद्यञ्चोभयमेव सञ्जाघटीतीति चेन्न नानावयवतन्नाशादिकल्पने गौरवान्मनसो निरवयवाणुरूपकल्पने तु लाघवात्।

# अथ गुणखण्डम्

## "अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः"

( व्याख्यायताम् )

गुणा रूपादयो द्रव्याश्रिता भवन्ति स्वयञ्च ते गुणक्रियारहिताः सन्ति। लक्षणन्तु गुणस्य गुणत्वजातिमत्त्वम्। ननु गुणत्वजातौ किं मानमिति चेन्न द्रव्यकर्मभिन्ने सामान्यवति या कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् निरवच्छिन्नकारणताया असम्भवात् घटनिष्ठकार्यतानिरूपितद्रव्यनिष्ठकारणतावदित्यनुमानेन तत्सिद्धेः। न्यूनातिरिक्तदेश-

वृत्तित्वात् रूपत्वादिकं सत्ता वा तत्रावच्छेदिका न भवितुमर्हति। द्रव्याश्रितत्वमित्यपि गुणलक्षणं भवितुमर्हति किन्तु द्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्नजातिमत्त्वं द्रव्याश्रितत्वमिति विवक्षणीयम्। द्रव्यत्वव्यापतावच्छेदकं गुणत्वमेव भवितुमर्हति न तु द्रव्यत्वं कर्मत्वं वा गगनादौ द्रव्यकर्मणोरभावात्, नापि द्रव्यत्वं तस्य जातिभिन्नत्वात्। निर्गुणत्वञ्च सामान्यवत्त्वे सति कर्मान्यत्वे सति बोध्यं तेन क्वापि न दोषः। निष्क्रियेति स्वरूपकथनं न तु लक्षणं गगनादावतिव्याप्तेः।

## के मूर्तगुणाः ? केऽमूर्तगुणाः ? के चोभयेषां गुणाः केऽनेकाश्रिताः ? के सामान्यगुणाः ? के विशेषगुणाः ?

रूपरसगन्धस्पर्शपरत्वापरत्वद्रवत्वस्नेहवेगस्थितिस्थापका मूर्तानामेव गुणाः। धर्माधर्मभावनाशब्दबुद्ध्यादयोऽमूर्तगुणाः। संख्यापरिमाणपृथक्त्वसंयोगविभागा उभयेषां गुणाः। संयोगविभागौ द्वित्वादिकाश्च संख्या द्विपृथक्त्वादयश्चानेकाश्रिता गुणाः। संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वनैमित्तिकद्रवगुरुत्ववेगाः सामान्यगुणाः। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नरूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवादृष्टभावनाशब्दा विशेषगुणाः सन्ति। एवमन्येऽपि गुणा बोध्याः।

## रूपत्वजातौ किं मानमिति प्रतिपाद्य चित्रस्य रूपान्तरत्वमस्ति नवेति प्रतिपादयत।

नीलो वर्णः पीतो वर्ण इति वर्णविशेषोल्लेखिनी प्रतीतिरस्ति तेन रूपत्वजातिः प्रत्यक्षसिद्धा। इत्थं नीलत्वादिकमपि प्रत्यक्षसिद्धम्। नीलो नष्टःनील उत्पन्न इत्यादि-

प्रतीतेर्नीलादिव्यक्तिबहुत्वात्। समवायविषयकोऽसौ प्रत्यय इति तु न वाच्यम्, तत्र समवायानुल्लेखात्। ननु स एवायं नील इति प्रतीतेरेक एव नीलः सिध्यतीति चेन्न, प्रत्यक्षस्य तज्जातीयविषयकत्वात्। सैवेयं गुर्जरीतिवत्। अत एकत्वप्रत्ययस्य बाधितत्वान्नीलत्वजातिः सिध्यति। चित्रमतिरिक्तमिति प्राचीनास्तथाहि—नीलपीताद्यवयवारब्धोऽवयवी नीरूपो न भवितुमर्हति प्रत्यक्षाभावापत्तेः। नापि सर्वत्र पीतोत्पत्तिर्नीलस्थलेऽपि पीतोपलब्धिप्रसङ्गात्। स्वल्पप्रदेशे नीलाद्युत्पद्यते इत्यपि न रूपस्य व्याप्यवृत्तित्वात्। अतोऽगतिकगत्या चित्रं भिन्नमेव रूपमिति स्वीकार्यम्। अत एवैकं चित्रमित्यनुभवः।

इत्थञ्च नीलादीनां पीताद्यारम्भे प्रतिबन्धकत्वकल्पनादवयविनि न पीताद्युत्पत्तिः। नव्यास्तु—अव्याप्यवृत्ति नीलादिकं तत्रोत्पद्यते नीलादेः पीतादिप्रतिबन्धकत्वकल्पने गौरवात्।

अतएव—लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते॥

इत्यादिशास्त्रमुपपद्यते। न च लाघवादेकं रूपमनुभवविरोधात्। अन्यथा घटादेरपि लाघवादैक्यं स्यात्।

**नैयायिकानां मते कुत्र पाकः? वैशेषिकाणां मते च कुत्र पाकः? कियद्भिः क्षणैश्च पाको भवति?**

नैयायिकानां मतेऽवयवेऽवयविनि चोभयत्र पाकः। वैशेषिकाणां मते त्ववयवे अर्थात् परमाणौ एव पाकः। पञ्चमक्षणादारभ्यैकादशक्षणं यावत् पाको भवति। तथाहि—अवयविविनाशानन्तरं स्वतन्त्रेषु परमाणुषु पाकः। पुनश्च पक्वपरमाणुसंयोगाद्-

द्व्यणुकादिक्रमेण महावयविन उत्पत्तिः पुनर्भवति। तेजसां वेगाधिक्यात् पूर्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्च भवति। विभागजविभागानङ्गीकारे नवक्षणः पाकः। तदङ्गीकारे विभागः किञ्चित्सापेक्षो विभागं जनयेत्। अन्यथा तस्य कर्मत्वं स्यात् "संयोगविभागयोरनपेक्षं कारणं कर्म" ति कर्मलक्षणात्। यदि परमाणुद्वयसंयोगनाशाव्यवहितोत्तरक्षण एव विभागजविभागः स्यात्तदा दशक्षणाप्रक्रिया। द्व्यणुकनाशाव्यवहितोत्तरक्षणे यदि पाकस्तदैकादशक्षणा। नवक्षणा—वन्हिसंयोगात् परमाणौ कर्म। ततः परमाण्वन्तरेण विभागः। तत आरम्भकसंयोगनाशः। ततो द्व्यणुकनाशः ॥१॥ ततः परमाणौ श्यामादिनाशः ॥२॥ ततो रक्ताद्युत्पत्तिः ॥३॥ ततो द्रव्यारम्भानुकूला क्रिया ॥४॥ ततो विभागः ॥५॥ ततः पूर्वसंयोगनाशः ॥६॥ तत आरम्भकसंयोगः ।७। ततो द्व्यणुकोत्पत्तिः ॥८॥ ततो रक्ताद्युत्पत्तिः ॥९॥

न च श्यामादिनाशक्षणे रक्तोत्पत्तिक्षणे वा द्रव्यारम्भानुकूला क्रियाऽस्त्विवति वाच्यम्, अग्निसंयुक्ते परमाणौ या क्रिया तांद्विनाशमन्तरेण गुणोत्पत्तिमन्तरेण च परमाणौ क्रियान्तराभावात्। कर्मवति कर्मान्तरानुत्पत्तेर्निर्गुणे द्रव्ये द्रव्यारम्भानुकूलक्रियानुपपत्तेश्च। श्यामादिनिवृत्तिकाल एव रक्ताद्युत्पत्तिस्तु न शङ्कनीया पूर्वरूपादिध्वंसस्यापि रूपान्तरे हेतुत्वात्। अथ दशक्षणा— वन्हिसंयोगाद्द्व्यणुकारम्भे परमाणौ कर्म। ततो विभागः। तत आरम्भकसंयोगनाशः। ततो द्व्यणुकनाशविभागजविभागौ १ ततः श्यामनाशपूर्वसंयोगनाशौ ॥२॥ ततो रक्तोत्पत्त्युत्तरसंयोगौ ।३ ततो वन्हिनोदनजन्यपरमाणुकर्मणो नाशः ॥४॥ ततोऽदृष्टवदात्मसंयोगाद्, द्रव्यारम्भानुकूला क्रिया ।५। ततो विभागः ।६। ततः

पूर्वसंयोगनाशः ।७। तत आरम्भकसंयोगः । इत्यादि पूर्ववत् क्षणत्रयं बोध्यम् । अथैकादशक्षणा—वन्हिसंयोगात् परमाणौ कर्म । ततो विभागः । ततो द्रव्यारम्भकसंयोग-नाशः । ततो द्व्यणुकनाशः ।१। ततो द्व्यणुकनाशकाल एव विभागजविभागश्यामनाशौ ।२। ततः पूर्वसंयोगनाशरक्तोत्पत्ती ।३। तत उत्तरसंयोगः ।४। ततो वन्हिनोदनजन्यपरमाणुकर्मणो नाशः ।५। इत्यादि षट्क्षणाः पूर्ववज्ज्ञेयाः ।

न च यथा मध्यमशब्दः पूर्वनाशक उत्तरशब्दोत्पादकश्च भवति तथैवैकाग्निरेव रूपनाशको रूपोत्पादकश्च स्यादिति वाच्यम्, तावत्कालमेकस्याग्नेरस्थिरत्वात् । किञ्च नाशकस्यैवोत्पादकत्वे नष्ट रूपेऽग्निनाशे नीरूपश्चिरं परमाणुः स्यात् । उत्पादकश्चेन्नाशक-स्तदा रक्तोत्पत्तौ तदग्निनाशे रक्ततरता न स्यात् । परमाण्वन्तरे कर्मचिन्तनात् पञ्चमादिक्षणेऽपि पाको भवतीति क्षण प्रक्रिया ।

## द्वित्वादीनां केन सम्बन्धेन वृत्तिर्भवति ? कश्च तेषां नाशकः ?

द्वित्वादयः पर्याप्त्याख्यस्वरूपसम्बन्धेनानेकाश्रये वर्तन्ते । द्वित्वादिसमवायस्य प्रत्येकं घटादावपि विद्यमानत्वात् । एको द्वाविति ज्ञानाभावात् एको न द्वाविति ज्ञानसम्भवाच्च न समवा-येन द्वित्वादीनां वृत्तिः ।

अपेक्षाबुद्धिनाशेन द्वित्वादीनां नाशो भवति । तथाहि-प्रथमम-पेक्षाबुद्धिः । ततो द्वित्वोत्पत्तिः । ततो विशेषणज्ञानं द्वित्वत्वनि-र्विकल्पात्मकम् । ततो द्वित्वत्वविशिष्टप्रत्यक्षमपेक्षाबुद्धिनाशश्च । ततो द्वित्वनाशः । अपेक्षाबुद्धि[illegible] द्वित्वत्व[illegible] तिष्ठतीतरथा निर्विकल्पककालेऽपेक्षाबुद्धेर्नाशानन्तरं द्वित्वस्यैव नाशः

स्यान्नतु द्वित्वप्रत्यक्षम्, तदानीं विषयाभावात्। तस्मात् द्वित्वप्रत्यक्षादिकमपेक्षाबुद्धेर्नाशकं कल्प्यते। नचापेक्षाबुद्धिनाशात् कथं द्वित्वनाश इति वाच्यम्, कालान्तरे द्वित्वप्रत्यक्षाभावात्। अपेक्षाबुद्धिस्तदुत्पादिका तन्नाशात् तन्नाश इति कल्पनात्। नचापेक्षाबुद्धिर्द्वित्वप्रत्यक्षे कारणं स्यादिति वाच्यम्? लाघवेन द्वित्वप्रत्यक्षस्यैव कारणत्वस्यौचित्यात्। अतीन्द्रिये द्व्यणुकादौ योगिनामपेक्षाबुद्धिः। सर्गादिकालीनपरमाण्वादौ ब्रह्माण्डान्तरवर्तियोगिनामीश्वरीयापेक्षाबुद्धिर्वा द्वित्वादिकारणम्।

## अपेक्षाबुद्धेः किं लक्षणम्? यत्रानियतैकत्वज्ञानं तत्र कतरा संख्या?

अनेकानि एकत्वानि विशेषणानि यस्यां बुद्धौ सा बुद्धिरपेक्षाबुद्धिः। अयमेकोऽयमेक इत्याकारिका इत्यर्थः। तत्तद्व्यक्तिमात्रनिष्ठेदन्त्वावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताशालिनी बुद्धिरित्यर्थः। यत्रैकत्वस्य नियतता नास्ति तत्र बहुत्वसंख्योत्पद्यते यथा सेनावनादौ कन्दलीकारस्येद मतमस्ति। आचार्यास्तु त्रित्वादिकमेव बहुत्वम्। त्रित्वत्वादिव्यापिका बहुत्वजातिभिन्ना नास्ति। सेनावनादावपि त्रित्वादिकमस्ति किन्तु नियतानेकत्वज्ञानाभावरूपाद्दोषान्न ज्ञायते। अत एव बहुतरेयं सेनेति प्रतीतिरुत्पद्यते। यदि बहुत्वं संख्यान्तरं स्यात्तर्हि तत्तारतम्याभावादियं प्रतीतिः कथं नाम संगच्छेत।

## आश्रयनाशात् परिमाणं कथं नश्यति?

ननु त्रिचतुरादिपरमाणुविश्लेषे परिमाणान्तरं दरीदृश्यते, तर्हि परिमाणमाश्रयनाशात् कथं नश्यतीतिचेन्न परमाणुनाशे द्व्य-

गुणस्य नाशस्तन्नाशे त्रसरेणुनाशस्ततश्च महावयविनो नाशस्यावश्यकत्वात्। नच पटादिविनाशेऽपि तन्त्वन्तरसंयोगान् परिमाणाधिक्यं न स्यादिति वाच्यम्, तत्रापि वेमाद्यभिघातेनासमवायिकारणतन्तुसंयोगनाशात् पटनाशस्यावश्यकत्वात्। किञ्च तन्त्वन्तरस्य तत्पटावयवत्वमस्ति न वा ? आद्ये पूर्वं तत्पटाभावप्रसङ्गः। अन्त्ये संयुक्तद्रव्यान्तरवत् परिमाणाधिक्यं न स्यात। तस्मात्तत्र तन्त्वन्तरसंयोगान् पूर्वपटनाशस्ततः पटान्तरोत्पत्तिः। ननु यदि पटान्तरोत्पत्तिस्तर्हि स एवायं पट इति प्रत्यभिज्ञा कुतो भवतीति चेन्न सैवेयं दीपशिखेतिवत्तदुपपत्तेः। न च पूर्वतन्तवस्तन्त्वन्तरसहकारात् पूर्वपटे सत्येव पटान्तरमारभन्तामिति वाच्यम्, मूर्तयोः समानदेशताविरोधात्तत्र पटद्वयासम्भवात्। एकदा नानाद्रव्योपलम्भस्य तत्र बाधितत्वाच्च। तस्मात् पूर्वं पूर्वपटनाशस्तदा पटान्तरोत्पत्तिरित्येव स्वीकार्यम्।

पृथक्त्वं कथं गुणान्तरम् ?

नन्वयमस्मात् पृथगित्यादावन्योन्याभावोऽवभासते तत् कथं पृथक्त्वं गुणान्तरं स्वीक्रियते इति चेन्न प्रतीतिभेदादुभयसिद्धेः। अयमस्मात् पृथगिति पृथक् प्रतीतिः। इदं नेत्यन्योन्योभावप्रतीतिः। न च शब्दवैलक्षण्यं नत्वर्थवैलक्षण्यमिति वाच्यम्, अर्थवैलक्षण्यं विना घटात् पृथगितिवद् घटो न पट इत्यत्रापि पञ्चमीप्रसङ्गात्। अतः पृथक्त्वमन्योन्याभावतो भिन्नं गुणान्तरं कल्प्यते। नापि पृथक्त्वगुणेनान्योन्योभावश्चरितार्थो रूपं न घट इति प्रतीत्यनापत्तेस्तस्मादुभयं सिध्यति।

सलक्षणं सभेदं संयोगं निरूप्य सभेदो विभागोऽपि वर्णनीयः।

संयुक्तव्यवहारासाधारणहेतुः संयोगः। स त्रिविधः अन्यतरकर्मजः—यथा—श्येनशैलादिसंयोगः—उभयकर्मजः—यथा मेषयोः संयोगः। संयोगजसंयोगः—यथा कपालतरुसंयोगात् तरुकुम्भयोः संयोगः। कर्मजसंयोगो द्विधा भवति अभिघाताख्यो नोदनाख्यश्च। आद्यः शब्दहेतुर्द्वितीयः शब्दाहेतुः। एवं विभागोऽपि त्रिधा भवति। अन्यतरकर्मजः (१) उभयकर्मजः ( ) विभागजविभागः (३) विभागजविभागो द्विधा भवति। कारणमात्रविभागजन्यः कारणाकारणविभागजन्यश्च। आद्यस्तावत्—यत्र कपाले कर्म ततः कपालद्वयविभागः। ततो घटारम्भकसंयोगनाशः ततो घटनाशः ततस्तेनैव कपालविभागेन कपालस्याकाशविभागो जन्यते। तत आकाशसंयोगनाशः। तत उत्तरसंयोगः ततः कर्मनाशः। न च कपालकर्मणैव कपालाकाशविभागः कुतो न जन्यत इति वाच्यम्, एकस्यां क्रियायामारम्भकसंयोगविभागजनकत्वमनारम्भकसंयोगविभागजनकत्वञ्च न भवितुमर्हति तथा सति विकसत्कमलकुड्मलभङ्गप्रसङ्गात्। न च कारणविभागेनैव द्रव्यनाशात् पूर्वं देशान्तरविभागः कुतो न जन्यत इति वाच्यम्, आरम्भकसंयोगविरोधिविभागवतोऽवयवस्य सति द्रव्ये देशान्तरविभागासम्भवात्। द्वितीयस्तावत्—यत्र हस्तक्रियया हस्ततरुविभागस्ततः शरीरेऽपि विभक्तप्रत्ययो भवति "शरीरतरू विभक्तौ" इति तत्र शरीरतरुविभागे हस्तक्रिया न कारणं तस्या हस्त एव सत्त्वात्। यदि सकलावयवेषु क्रिया भवेत्तदैवावयविक्रिया भवितुमर्हति। अतस्तत्र कारणाकारणविभागेन कार्याकार्यविभागो भवति। अत एव विभागो गुणान्तरमन्यथा शरीरे विभक्तप्रत्ययो न स्यादतः संयोगनाशेन विभागो नान्यथासिद्धः।

## संशयस्य किं लक्षणम् ? किञ्च तत्कारणम् ?

विरुद्धकोटिद्वयावगाहि ज्ञानं संशयः।

"समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः" इति गौतमेन संशयकारणानि दर्शितानि तत्र विशेषापेक्षो विमर्श इति संशयस्य लक्षणम्। समानधर्मोपपत्तेः=समानधर्मज्ञानात् संशयो भवति यथोर्ध्वत्वादिसमानधर्मात् स्थाणुर्वा पुरुषो वेति संशयो भवति। अनेकधर्मोपपत्तेः—असाधरणधर्मज्ञानात् नित्यानित्यव्यावृत्तेन शब्दत्वेन शब्दे संशयो भवति शब्दो नित्योऽनित्यो वा। विप्रतिपत्तेः—विरुद्धमतद्वयात्—यथा आत्माऽस्तीत्येकं दर्शनं नास्तीत्यपरं तत्र संशयो भवति। उपलब्ध्यव्यवस्थातः—ज्ञाने प्रामाण्यसंशयात् विषयसंशयो यथा—जलविषयकज्ञाने प्रामाण्यसंशयाज्जलज्ञानं प्रमाणं न वेति संशयो भवति। एवमप्रामाण्यसंशयात्। चकारेण व्याप्यसंशयाद् व्यापकसंशय इत्यादिकं बोध्यम्। इयाँस्तु विशेषः—शब्दव्याप्तिज्ञानादीनां निश्चयमात्रजनकत्वाद् विप्रतिपत्तिर्न संशयकारणमपितु मानस एव तत्र संशयः। विप्रतिपत्तिस्तत्र प्रयोजिकाऽस्तीति विश्वनाथः।

## प्रमायाः किं लक्षणम्।

यदि भ्रमभिन्नज्ञानं प्रमेत्युच्यते तदा शुक्तिरजतयोरिमे रजते इति ज्ञानं यत्र जायते तत्र रजतांशेऽपि प्रमा न स्यात् तज्ज्ञानस्य भ्रमभिन्नत्वाभावात्। तस्माल्लक्षणान्तरमाह—

तद्वद्विशेष्यकत्वे सति तत्प्रकारकं ज्ञानं प्रमेति प्रमालक्षणम्। रजतादौ रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रकारकज्ञानसत्त्वात्

समन्वयः । नन्वेवं स्मृतेरपि प्रमात्वं स्यात्ततश्च तत्करणस्य पूर्वानुभवस्य संस्कारस्य वा प्रमाणान्तरत्वं स्यात् प्रमितिजनकतावच्छेदकं प्रमाणमिति प्रमाणलक्षणादिति चेन्न यथार्थानुभवकरणस्यैव प्रमाणत्वेन विवक्षितत्वात् । न च कपालादौ संयोगादिना घटादिज्ञानेऽतिव्याप्तिरिति वाच्यम्,येन सम्बन्धेन यद्वत्ता तेन सम्बन्धेन तद्विशेष्यकं तेन सम्बन्धेन तत्प्रकारकं ज्ञानं प्रमेति परिष्करणात् । कपालस्य घटवत्ता समवायेन न तु संयोगेनातो नातिव्याप्तिः । निर्विकल्पन्तु न प्रमा नापि भ्रमो द्वयोरपि प्रकारताघटितत्वान्निर्विकल्पस्य च त्रिविधविषयताशून्यत्वात् । ननु वृक्षे कपिसंयोगज्ञानं प्रमा भ्रमश्च स्यादितिन्न, प्रतियोग्यनाश्रये कपिसंयोगाभाववति कपिसंयोगज्ञानस्य भ्रमत्वात् । न च प्रतियोगिसमानाधिकरणत्वात् संयोगाभावावच्छेदेन संयोगज्ञानं भ्रमो न स्यादिति वाच्यम् । संयोगाभावावच्छेदेन वृक्षादौ संयोगज्ञानस्य भ्रमत्वाल्लक्ष्यभेदाल्लक्षणभेदेऽपि न क्षतिः ।

## प्रमात्वं स्वतो गृह्यते न वा ?

गुरुभट्टमिश्रमीमांसकाः प्रमात्वं स्वतो ग्राह्यमिति वदन्ति । तथाहि-गुरूणां मते ज्ञानस्य स्वप्रकाशत्वमस्ति, तस्मात्तज्ज्ञानप्रामाण्यं तेनैव गृह्यते । भट्टानां मते ज्ञानमतीन्द्रियं ज्ञानजन्या ज्ञातता प्रत्यक्षा तया ज्ञानमनुमीयते । अनुमानप्रकारश्चायम्–इयं ज्ञातता घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानजन्या घटवृत्तिघटत्वप्रकारकज्ञाततात्वात् । या यद्वृत्ति यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानसाध्या यथा पटे पटत्वप्रकारिका ज्ञातता । मुरारिमिश्राणां मतेऽनुव्यवसायेन ज्ञानं गृह्यते । सर्वेषामपि मते तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रामाण्यं गृह्यते । [partly obscured by watermark]

भवत्यतो ज्ञानवित्तिवेद्यो विषयः । तन्न तथा सति दूरादवलोकित-जलादौ प्रामाण्यसंशयो न स्यात्, तत्र यदि ज्ञानं ज्ञातं तदा त्वन्मते प्रामाण्यं ज्ञातमेवेति कथं संशयः ? तस्माज्ज्ञाने प्रामाण्यमनुमेयम् । तथाहि—इदं ज्ञानं प्रमा सफलप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथाऽप्रमा । इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा गन्धवति पृथिवीत्वप्रकारक-ज्ञानत्वात् । न च हेतुज्ञानं कथं जातमिति वाच्यम्, पृथिवीत्व-प्रकारकत्वस्य स्वतो ग्राह्यत्वात् । तत्र गन्धग्रहेण गन्धवद्विशेष्यकत्व-मपि गृह्यते, परन्तु तत्प्रकारकत्वावच्छिन्नतद्विशेष्यकत्वं न गृह्यते संशयानुरोधात् ।

## पूर्वपक्षखण्डनपुरःसरमन्यथाख्याति साधयत ।

ननु सर्वेषां ज्ञानानां यथार्थत्वात् प्रमालक्षणे तद्वद्विशेष्यकत्वं विशेषणं व्यर्थं सम्भवव्यभिचाराभ्यांस्याद्विशेषणमर्थवदिति नियमात् । प्रवृत्तित्वावच्छिन्नम्प्रति भेदाग्रहस्य कारणत्वेऽपि रजतप्रत्यक्ष-कारणस्य सन्निकर्षस्याभावात् रङ्गे रजतबुद्धिर्नोपपद्यते तर्हि केयम-न्यथाख्यातिरिति चेन्न सत्यरजतस्थले रजतत्वविशिष्टरजतज्ञानस्य निश्चितत्वादन्यत्रापि लाघवेन विशिष्टज्ञानस्यैव कारणत्वात् । इत्थञ्च रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणाप्रत्यासत्तिकल्पनेऽपि न क्षतिः फलमुखगौरवस्यादोषत्वात् । किञ्च यत्र रङ्गरजतयोरिमे रजते रङ्गे वेति ज्ञानं तत्र सन्निकर्षरूपकारणबाधोऽपि नास्ति । अन्यच्च-यत्र रङ्गरजतयोरिमे रङ्गरजते तत्रान्यथाख्यातिभयात् भेदाग्रहस्य कारणत्वाद् युगपत् प्रवृत्तिनिवृत्ती स्याताम् । किञ्चानुमितिम्प्रति व्याप्यवद्भेदाग्रहस्यकारणत्वे जलह्रदो वन्हिमानन्यथाख्यातिरूपा-नुमितिरियमापद्यते । विशिष्टज्ञानस्यकारणत्वेऽयोगोलकं वन्हिम-यनुरोधात् वन्हिव्याप्यधूमज्ञानमन्यथाख्यातिरूपमापतितम् ।

सेयमुभयतः पाशारज्जुः। अन्यथाख्यातौप्रत्यक्षमपि प्रमाणं रङ्गं रजततयाऽवेदिपमित्यनुभवात्।

तर्कोपाध्योः किं लक्षणं किं च प्रयोजनम्?

"व्याप्यारोपेण व्यापकारोपस्तर्कः" यत्र भूयोदर्शनाद् व्यभिचारशङ्का नापैति तर्केण साऽपसार्यते। यदि वन्हिविरहिण्यपि धूमः स्यादिति शङ्का, तदा सा वन्हिधूमयोः कार्यकारणभावस्मरणान्निवर्तते। यद्ययं वन्हिमान् न स्यात्तदा धूमवान् न स्यात् कारणं विना कार्यानुत्पत्तेः।

साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकत्वमुपाधिः। साध्यवन्निष्ठात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम्। साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम्—यथा पर्वतो धूमवान् वन्हेरित्यत्रार्द्रेन्धनसंयोग उपाधिः। साध्यवति पर्वते योऽत्यन्ताभावः घटाद्यभावस्तत्प्रतियोगी घटोऽप्रतियोगी आर्द्रेन्धनसंयोग इति साध्यव्यापकत्वम्। साधनवति तप्तायःपिण्डे य आर्द्रेन्धनसंयोगाभावस्तत्प्रतियोगी आर्द्रेन्धनसंयोग इति साधनाव्यापकत्वम्। यत्र २ धूमस्तत्र २ आर्द्रेन्धनसंयोग इति साध्यव्यापकता यत्र २ वन्हिस्तत्र २ आर्द्रेन्धनसंयोग इति नास्ति तप्तायःपिण्डे तदभावदर्शनात्। इति साधनाव्यापकतेति तु ऋजुमार्गः। न च "स श्यामो मित्रातनयत्वात्" "वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात्" "ध्वंसो विनाशी जन्यत्वादि" त्येतेषु शाकपाकजत्वमुद्भूतरूपवत्त्वं भावत्वञ्च क्रमश उपाधयो न स्युर्घटादावात्मादौ प्रागभावे च व्यभिचारदर्शनादिति वाच्यम्, यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमितितात्पर्यात्। उपाधिव्यभिचारेण हेत्वा-

त्मके पक्षे साध्यव्यभिचारानुमानमुपाधेः प्रयोजनम्। केषाञ्चिन्मते सत्प्रतिपक्षोत्थानमुपाधेः प्रयोजनम्। इत्थञ्च साधनव्यापकोऽपि तन्मत उपाधिः। यथा करका पृथिवी कठिनसंयोगवत्त्वादित्यत्रानुष्णाशीतस्पर्शवत्त्वमुपाधिः। तन्मते च साध्यव्यापकत्वे सति पक्षावृत्तिरुपाधिरिति लक्षणं बोध्यम्।

## शब्दोपमानयोः पृथक् प्रामाण्यमस्ति न वा ?

नैयायिकैः 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी' ति महर्षिगौतमसूत्रानुसारं चत्वारि प्रमाणानि स्वीक्रियन्ते। कणादमतानुसारिभिस्तु प्रत्यक्षमनुमानञ्चेति प्रमाणद्वयं स्वीकृतं शब्दोपमानयोस्तु पृथक् प्रामाण्यं नास्त्यनुमाने एव तयोरन्तर्भावात, तथाहि—एते पदार्था मिथः संसर्गवन्तो योग्यतादिमत्पदोपस्थापितत्वात् तादृशपदार्थवत्। दृष्टान्तेऽपि दृष्टान्तान्तरेण साध्यसिद्धिरिति। एवं गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादित्यनुमानेन पक्षधर्मताबलाद् गवयत्वप्रवृत्तिनिमित्तकत्वं सिध्यति। तन्न व्याप्तिज्ञानं विनापि शाब्दबोधस्यानुभवसिद्धत्वात्। नहि सर्वत्र शब्दश्रवणानन्तरं व्याप्तिज्ञाने प्रमाणमस्ति। अनुमानस्थले पदज्ञानं कल्पयित्वा शाब्दबोधो न स्वीक्रियते शाब्दस्थले व्याप्तिज्ञानं कल्प्यत इति कोऽयं न्यायस्तमाच्चत्वार्येव प्रमाणानीति सिद्धम्।

## अनुमानं कतिविधमिति सोदाहरणं प्रतिपाद्य व्याप्तिभेदोऽपि सोदाहरणं निरूपणीयः ?

अनुमानं त्रिविधं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात्। असद्विपक्षः केवलान्वयी। यथा घटोऽभिधेयः प्रमेयत्वा दित्यादौ। असत्सपक्षः केवलव्यतिरेकी। यथा पृथिवी

इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ निश्चितसाध्यवान् सपक्षो भवत्यत्र तु जलादित्रयोदशभेदः पूर्वं कुत्रापि न निश्चितस्तेन सपक्षाभावः । सत्सपक्षविपक्षोऽन्वयव्यतिरेकी । यथा वन्हिमान् धूमादित्यादौ । तत्र सपक्षो महानसादिर्विपक्षो जलह्रदादिश्च विद्यतेतराम् । व्याप्तिस्तावद् द्विविधा भवति अन्वयव्याप्तिर्व्यतिरेकव्याप्तिश्च । यत्र हेतुसत्तया साध्यसत्तासाध्यते सा अन्वयव्याप्तिर्यथा पर्वतो वन्हिमान् धूमादित्यत्र यत्र २ धूमस्तत्र २ वन्हिरित्यन्वयव्याप्तिः । यत्र साध्याभावेन हेत्वभावः साध्यते सा व्यतिरेकव्याप्तिर्यथात्रैव वन्ह्यभावेन धूमाभावसाधने । साध्याभावव्यापकीभूताभावप्रतियोगित्वं व्यतिरेकव्याप्तिरित्यर्थः ।

## अर्थापत्त्यनुपलब्धिचेष्टादीनां प्रमाणान्तरत्वमस्ति न वा ?

प्रत्यक्षादीनि पूर्वोक्तानि चत्वारि प्रमाणानि सन्ति । अर्थापत्त्यनुपलब्धी प्रमाणे इति मीमांसका वेदान्तिनश्च, चेष्टापि प्रमाणान्तरमित्यालङ्कारिकाः । सम्भव ऐतिह्यञ्च पृथक् प्रमाणमिति पौराणिकाः,तन्न ज्योतिः शास्त्रेण शतवर्षजीवित्वे ज्ञाते जीविनो गृहासत्त्वस्यच प्रत्यक्षादवगते तत्रार्थापत्त्या बहिः सत्त्वं न ज्ञायतेऽपि त्वनुमानेन तथाहि–देवदत्तो बहिः सत्त्ववान् जीवित्वे सति गृहाभावदर्शनादित्थञ्चार्थापत्तिर्न प्रमाणान्तरम् । अनुपलब्धिर्न प्रमाणान्तरमभावप्रत्यक्षस्यानुभविकत्वात् । किञ्चाज्ञातस्य कारणत्वे प्रत्यक्षत्वं ज्ञातस्य हेतुत्वे त्वनवस्थाप्रसङ्गः । चेष्टायाः शब्देऽनुमानेवाऽन्तर्भावः । सम्भवस्यानुमाने तथैवैतिह्यस्य निश्चितत्वे शब्देऽन्तर्भावः । तदित्थं चत्वार्येव प्रमाणानीति नैयायिकडिण्डिमघोषः ।

प्रवृत्तिम्प्रति किं कारणम् ?

प्राचीनानां मते प्रवृत्तिम्प्रति चत्वारि कारणानि सन्ति । चिकीर्षा कृतिसाध्यताज्ञानं ( इदं मत्कृतिसाध्यमित्याकारकम् ) इष्टसाधनताज्ञानं ( इदं मदिष्टसाधनमित्याकारकम् ) समवायिकारणस्य प्रत्यक्षञ्चेति । इष्टसाधनताज्ञानञ्च बलवदनिष्टेन यदि रहितं भवेत्तदा कारणम् । उपर्युक्तकारणचतुष्टयस्य घटादौ विद्यमानत्वात् कुम्भकारादिस्तत्र प्रवर्तते । बलवदनिष्टयुक्तत्वान्मधुविषसंपृक्तान्नभोजनादौ न चिकीर्षा ततश्च न प्रवृत्तिः । चन्द्रमण्डलानयनादौ कृतिसाध्यताज्ञानाभावान्न प्रवृत्तिः । तृप्तस्य भोजने न प्रवृत्तिरिष्टसाधनताज्ञानाभावात् । उपादानप्रत्यक्षाभावाद् द्व्यणुकादौ न प्रवृत्तिरिति । प्रभाकरमते तु कृतिसाध्यताज्ञानं कारणं नत्विष्टसाधनताज्ञानं कारणं चन्द्रमण्डलानयनादौ प्रवृत्त्यापत्तेः । द्वयोः कारणत्वे तु गौरवम् । ननु भो प्रभाकर ! मधुविषसंपृक्तान्नभोजनादौ बुद्धप्रतिमावन्दनादौ च प्रवृत्त्यापत्तिः कृतिसाध्यताज्ञानस्य सत्त्वादिति चेन्न स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानं प्रवर्तकमिति स्वीकारात्, अर्थात् प्रवर्तमानपुरुषे यो धर्मस्तस्य पुरुषे यः सम्बन्धस्तत्स्मरणजन्यकार्यताज्ञानं प्रवर्तकम्, यथा पाकादौ पुरुषे कामनाधर्मोस्ति तद्वत्तास्मरणजन्यं कृतिसाध्यताज्ञानं प्रवर्तकं भवत्येव । नित्ये तु शौचादिकं पुरुषे धर्मः । तस्य कृतिसाध्यताज्ञानम्प्रति कारणताऽनुमानेन । यथा—पाको मत्कृतिसाध्यः मत्कृतिं विनाऽसत्त्वे सति मदिष्टसाधनत्वात् । न च बलवदनिष्टरहितेष्टसाधनताविषयककृतिसाध्यताज्ञानं कारणमितिवाच्यम्, इष्टसाधनत्वकृतिसाध्यत्वयोर्युगपज्ज्ञातुमशक्यत्वात्, साध्यत्वसाधनत्वयोर्विरोधात् ।

अत्र नैयायिकः प्रत्यवतिष्ठते—भिन्नकालयोः साध्यत्वसाधनत्वयोरविरोधात् बलवदनिष्टरहितेष्टसाधनत्वे सति कृतिसाध्यताज्ञानं कारणमित्येव स्वीकार्यम्। नव्यमते तु यादृशस्य पुंसः कृतिसाध्यं यद्दृष्टं तादृशत्वं स्वस्य निश्चित्य प्रवर्तते न तु कृतिसाध्यताज्ञानं कारणं भविष्यत्पाके तस्य ज्ञातुमशक्यत्वात्। तन्मन्दं स्वकल्पितलिप्यादिप्रवृत्तौ यौवने कामोद्भेदादिना सम्भोगादौ च तदभावात्।

**यदि विधेरपीष्टसाधनत्वादिकमेवार्थस्तर्हि सन्ध्यादिनित्यकर्मविधीनां का गतिः ?**

सन्ध्याश्राद्धादिनित्यकर्मणि ग्रहणश्राद्धादौ नित्यत्वं नैमित्तिकत्वञ्च यथा न विरुध्यते तथैव नित्यत्वकाम्यत्वयोरप्यविरोधात् कामना कल्प्यते। पण्डापूर्वं तु न फलं स्वतः पुरुषार्थाभावात्तस्यापि तु रात्रिसत्रन्यायाद् ब्रह्मलोकप्राप्तिः फलम्। केचित्तु पापाभावः फलमिति स्वीकुर्वते। तथा च स्मृतिः—

सन्ध्यामुपासते ये तु सततं शंसितव्रताः।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्॥'

इत्थञ्च—"दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्" इति प्रीत्यात्मकमेव फलम्। गयाश्राद्धदाविवोद्देश्यत्वसम्बन्धेन फलजनकत्वस्य क्वचित् कल्पनाद् व्यधिकरणत्वेऽपि पितृप्रीतिरुपपद्यतेतराम्। "शास्त्रदर्शितफलमनुष्ठानकर्तरी" ति तूत्सर्गः। पितृणां मुक्तत्वे तु कर्तुरेव स्वर्गादिफलम्। दुःखप्रागभावकारणतया पापाभावेऽपि प्रवृत्तिर्भवितुमर्हति।

**ननु नित्यकर्मणीष्टसाधनत्वादिकसत्त्वेऽपि न कलञ्जं भक्षयेदित्यत्र कथं सङ्गतिः ?**

कलञ्जं नाम शूल्यंमासं विषदिग्धवाणाहतमृगमांसमथवा रक्त लशुनमथवा पलाण्डुनामेदम्। इत्यत्रेष्टसाधनत्वाभावः कृतिसाध्यत्वाभावश्च न बोधयितुं शक्यते, तस्मादत्र बलवदनिष्टरहितत्वविशिष्टेष्टसाधनत्वे सति कृतिसाध्यत्वं विध्यर्थः। कलञ्जभक्षणे बलवदनिष्टरहितत्वविशिष्टेष्टसाधनत्वे सति कृतिसाध्यत्वं नास्तीति नञा बोध्यते, विशेषणाभावप्रयुक्तविशिष्टाभावस्य सत्त्वात्।

**ननु यदि बलवदनिष्टाननुबन्धित्वं विध्यर्थस्तर्हि "श्येनेनाभिचरन् यजेते" त्यादौ कथं सङ्गतिः?**

इतिचेन्न श्येनयागस्य हिंसाजनकत्वाभावाद् विध्यर्थः सङ्गच्छते। अदृष्टाद्वारकत्वे सति मरणोद्देश्यकत्वे सति मरणानुकूलव्यापारत्वं हिंसात्वमिति तल्लक्षणादत एव कूपकर्तुः खड्गकारादेश्च न हिंसकत्वं नापि काशीमरणार्थं कृतशिवपूजादेर्हिंसात्वम। केचित्तु श्येनस्य हिंसा फलं न तु मरणं तस्य पापाजनकत्वेऽपि अग्रिमपापं प्रतिसन्धाय सन्तो न प्रवर्तन्त इत्याहुः।

**उदयनाचार्यमते को विध्यर्थ इति प्रतिपाद्य वेदस्य पौरुषेयत्वं साधयत।**

आचार्यमते आप्ताभिप्रायो विध्यर्थः कलञ्जभक्षणे तदभावान्न प्रवर्तते। यागादौ सत्त्वात् प्रवर्तते।

यथा कुमार्या गर्भः पुंयोगे मानं तथैव विधिरपि वेदवक्तरीश्वरे मानम्। न च वेदोऽपौरुषेयः सम्प्रदायाविच्छेदे सति अस्मर्यमाणकर्तृकत्वादिति वाच्यम्, कपिलकणादादिभिरद्यपर्यन्तं कर्तृस्मरणस्य प्रतीयमानत्वात्।

इतरथा स्मृतीनामप्यकर्तृकत्वापत्तिः। स्मृतौ कर्तृस्मरणमस्ति चेद्वेदेऽपि "छन्दांसि जज्ञिरे तस्मात्" इत्यादि। एवं 'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते" इत्यपि द्रष्टव्यम् न च—

"स्वयंभूरेष भगवान् वेदो गीतस्त्वया पुरा।
शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः॥"

इत्यस्य का गतिरिति वाच्यम्, अस्य वेदस्तुतिमात्रत्वात्। ननु पौरुषेयत्वे भ्रमादिसम्भवादप्रामाण्यमिति चेन्न नित्यसर्वज्ञत्वेन निर्दोषत्वात्। अतएव कपिलादेरपि भ्रमसम्भवान्न तस्य कर्तृतापि त्वीश्वरस्यैव।

## धर्मसद्भावे किं प्रमाणम्?

गङ्गास्नानयागादिव्यापारतया धर्मः कल्प्यते। यागादीनां चिरविनष्टतया निर्व्यापारतया च स्वर्गम्प्रति जनकत्वं न भवितुमर्हति स्वर्गस्य कालान्तरभावित्वात्। तदुक्तमाचार्यैः—

'चिरध्वस्तं फलायालं न कर्मातिशयं विना" चिरध्वस्तं कर्मातिशयं विना फलाय अलं समर्थं नेत्यर्थः। न च कालसहकृतयागध्वंसेनैव सिद्धे किमर्थं धर्मः कल्प्यते इति वाच्यम, अनन्तगङ्गजलादिसंयोगध्वंसानां व्यापारत्वमेपेक्ष्यैकधर्मकल्पने लाघवात्।

ननु मा भूद् यागध्वंसो व्यापारो मा वा धर्मः कल्प्यतामनन्यथासिद्धपूर्ववर्तित्वस्य गङ्गास्नानयागादौ सत्त्वादिति चेन्न।

कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात्।
गण्डकीबाहुतरणाच्च धर्मः क्षरति कीर्तनात्॥

इति स्मरणात्! धर्माभावे कस्य नाशः स्याद् यागादीनां स्वयं विनष्टत्वात्—एतेन देवताप्रीतिरेव फलमित्यपास्तम्। सर्वत्र

देवताप्रीतेरसम्भवादनुद्देश्यत्वाच्च । विष्णुप्रीतिशब्देनापि स्वर्गादिरेव गृह्यते विष्णौ जन्यसुखादेरभावात् ।

**धर्माधर्मयोः किं लक्षणं कश्च तयोर्नाशकः ? कश्चोत्पादकः ?**

स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनाञ्च साधनं धर्मः । नरकादिसकलदुःखानां नरकसाधनीभूतशरीरादीनाञ्च साधनमधर्मः । त्रिभिस्तयोर्नाशो भवति । तत्त्वज्ञानभोगौ द्वयोः समानौ धर्मस्य कर्मनाशादि पूर्वोक्तमधर्मस्य प्रायश्चित्तञ्च ।

ननु "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति भगवद्वाक्यविरोधात् तत्त्वज्ञानेन कथं धर्माधर्मयोर्नाश इति चेन्न, तत्र भोगपदस्य वेदबोधितनाशकोपलक्षकत्वात् । कथमन्यथा प्रायश्चित्तादिना कर्मणां नाशः । तदुक्तम्—

ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

इति न च ज्ञानाग्निना यदि सकलकर्मणां नाशस्तर्हि तत्त्वज्ञानिनः शरीरावस्थान सुखदुःखादिकञ्च न स्यादिति वाच्यम्, ज्ञानाग्निपद्ये सर्वकर्मपदेन सञ्चितक्रियमाणयोर्ग्रहणं न तु प्रारब्धस्य । प्रारब्धं कर्म तु यथा चापान्निर्गतो बाणो न प्रत्यावर्तते तथैव तद् भोगं सम्पाद्यैव समाप्नोति नान्यथा । नाभुक्तमिति पद्यं तदभिप्रायकमेवातः पूर्वापरविरुद्धाभिधानमिति नापादनीयम् । धर्माधर्मौ द्वावपि वासनाजन्यौ भवतः ।

शब्दस्य किं लक्षणं कतिविधः सः ? कथञ्च तस्योत्पत्तिः ? नित्योऽनित्यो वा शब्दः ?

श्रोत्रग्राह्यत्वे सति गुणत्वं शब्दत्वम्। स द्विविधः ध्वन्यात्मको वर्णात्मकश्च ध्वन्यात्मको भेर्यादौ, वर्णात्मकः संस्कृतभाषादिरूपः। वीचितरङ्गन्यायेन तदुत्पत्तिर्भवति, आद्यशब्दस्य बहिर्देशादिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते, तेन चापर एवं क्रमेण श्रोत्रोत्पन्नो गृह्यते। कस्यचिन्मते कदम्बगोलकन्यायादुत्पत्तिः। एकशब्देन दशदिक्षु दश शब्दा उत्पाद्यन्ते तैश्चान्ये दश। नैयायिकैः कण्ठताल्वाद्यभिघातजन्यत्वाच्छब्दानामनित्यत्वं स्वीक्रियते यज्जन्यं तदनित्यमिति व्याप्तेः। ननु तर्हि सोऽयं क इति प्रतीतिः कथं भवतीति चेन्न, साजात्यविषयिणीयं प्रतीतिर्नत्वभेदविषयिणी। यदौषधं मया कृतं तदौषधमन्येनापि कृतमित्यादिदर्शनात्, तेन सर्वेष्टसिद्धिः।

॥ इति गुणखण्डं समाप्तम् ॥



## अथ न्यायशास्त्रस्य पारिभाषिकाः केचिच्छब्दाः

| शब्दः | संस्कृतेऽर्थः | हिन्दी में अर्थ | समन्वयः |
|---|---|---|---|
| शिष्टः | फलसाधनतांशे भ्रान्तिरहितः | फल को सिद्ध करने वाले अंश में भ्रान्ति-रहित | |
| अन्वयसहचारः | कारणसत्त्वे कार्यसत्त्वम् | कारण के होने पर कार्य का होना | *जैसे शरीरा- |
| व्यतिरेकसहचारः | कारणाभावे कार्याभावः | कारण के न होने पर कार्य का न होना | जन्य हो पर कर्त्रजन्य न हो |
| अन्वयव्यभिचारः | कारणसत्त्वे कार्याभावः | कारण के होने पर कार्य का न होना | इस व्यभिचार- |
| व्यतिरेकव्यभि-चारः | कारणाभावे कार्यसत्त्वम् | कारण के न होने पर कार्य का होना | शङ्का को हटाने वाले तर्कसे रहित |
| *अप्रयोजकम् | व्यभिचारशङ्कानिवर्तकतर्करहितम् | व्यभिचारशङ्का को हटाने वाले तर्क से रहित | शरीराजन्य हेतु अप्रयोजक है |
| ()प्रतिबन्धकम् | कारणीभूताभावप्रतियोगि | कारणीभूत जो अभाव उसका प्रतियोगी | ()जैसे दाह में कारणीभूत अभाव |
| उत्तेजकम् | प्रतिबन्धकसमानकालीनकार्यजनकम् | प्रतिबन्धक के समान काल में कार्य को पैदा करने वाला | चन्द्रकान्त मणि का अभावप्र तियोगी चन्द्रकान्त मणि |

| शब्दः | संस्कृतेऽर्थः | हिन्दी में अर्थ | समन्वयः |
| --- | --- | --- | --- |
| §अवच्छेदकः | भेदकः—अन्यूनानतिरिक्तधर्मः | भेदक ऐसा धर्म जो न न्यून देश में, न अधिक देश में हो। | §जैसे घट में घटत्व |
| ‡अवच्छिन्नः | भिन्नः-व्यावृत्तः(युक्त इति तु स्थूलार्थः) | अलग किया हुआ। | ‡जैसे घटत्व से अवच्छिन्न घट है |
| निरवच्छिन्नः | यत्किञ्चिन्निष्ठावच्छेदकतानिरूपितावच्छेद्यत्वाभाववान् | जिसका कोई अवच्छेदक न हो। | |
| *प्रतियोगी | यस्याभावः स प्रतियोगी | जिसका अभाव हो वह अभाव का प्रतियोगी होता है। | *जैसे घटाभाव का प्रतियोगी घट है |
| विनिगमकम् | एकतरपक्षपातिनी युक्तिः | एक पक्ष की साधक युक्ति | |
| घटितः | युक्तः | युक्त | |
| घटकः | अवयवः | अवयव | |
| उपचयः | वृद्धिः | बढ़ना | |
| अपचयः | ह्रासः | ह्रास | |
| अनायतिः | अगतिकगतिः | लाचारी | |
| ग्रहः | ज्ञानम् | ज्ञान | |
| प्रकारः | विशेषणम् | विशेषण | |
| अपोहः | अतद्व्यावृत्तिः | उससे भिन्न को हटाना | |





| शब्दः | संस्कृतेऽर्थः | हिन्दी में अर्थ | समन्वयः |
|---|---|---|---|
| सामञ्जस्यम् | सम्यङ्निर्वाहः | अच्छी प्रकार कार्य चलना | |
| उपपत्तिः | सङ्गतिः | घटना (सङ्गत होना)। | []जैसे अरण्य |
| अभिभवः | बलवत्सजातीयेन तिरोभावः | बलवान् सजातीय के द्वारा छुपना। | वृक्षस्थ दण्ड में |
| []स्वरूपयोग्यत्वम् | कारणतावच्छेदकधर्मवत्त्वम् | कारणता का अवच्छेदक जो धर्म तादृश धर्मवाला होना। | दण्डत्व होने से अरण्य वृक्षस्थ |
| प्रतिसन्धानम् | स्मरणम् | स्मरण। | दण्ड में स्वरूप- |
| समवधानम् | सन्निधिः | समीपता। | योग्यता कार- |
| अन्वयव्यतिरेकौ | तत्सत्त्वे तत्सत्त्वमन्वयः। तदभावे तदभावः व्यतिरेकः | उसके होनेपर उसका होना(अन्वय) उसके न होने पर उसका न होना (व्यतिरेक) है। | णता है। ०जैसे कपिलत्व सफेद गौ में |
| वैशिष्ट्यम् | सम्बन्धः | सम्बन्ध | नहीं घटता |
| कुर्वद्रूपत्वम् | कुर्वत्=फलोन्मुखं रूपं यस्यतस्य भावः | फलोत्पादक जाति-विशेष | ॐजैसे शृङ्गित्व |
| ०अव्याप्तिः | लक्ष्यैकदेशेऽवृत्तिः | लक्ष्य के एक देश में लक्षण का न घटना | गौ और भैंस |
| ॐअतिव्याप्तिः | लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तिः | लक्ष्य और अलक्ष्य दोनों में लक्षण घटना | आदि में भी घटता है। |

| शब्दः | संस्कृतेऽर्थः | हिन्दी में अर्थ | समन्वयः |
|---|---|---|---|
| "साध्यम | साधयितुंयोग्यम | सिद्ध करने के योग्य | "जैसे अग्नि आदि। |
| सिद्धिः | पक्षे साध्यवत्ताज्ञानम | पक्ष में साध्य का प्रत्यक्ष | |
| व्याप्यः | व्याप्त्याश्रयः | व्याप्ति का जो आश्रय हो (हेतु) | |
| अध्याहारः | अश्रुतपदानामनुसन्धानम | नहीं सुने पद का अन्वेषण | |
| अवरुद्धः | निरुद्धः | निरुद्ध (घिरा हुआ) | |
| कलिका | शिखा | शिखा | |
| चरमः | अन्तिमः | अन्तिम | |
| →प्रत्यभिज्ञा | इन्द्रियसहकृतसंस्कारजन्यं ज्ञानम | इन्द्रिय जिसकी सहकारी हो ऐसा संस्कारजन्य-ज्ञान | →यह वही है जो मैंने बनारस में देखा था। |
| प्रत्यवायः | पापम | पाप | इस प्रकार का ज्ञान प्रत्यभिज्ञा है। |
| कल्पितः | निश्चितः | निश्चित | |
| योगक्षेमौ | अप्राप्तस्य प्राप्तिर्योगः<br>प्राप्तस्य संरक्षणं क्षेमः | अप्राप्त की प्राप्ति योग है<br>प्राप्त का संरक्षण क्षेम है | |



समाप्तेयं न्यायसिद्धान्तमुक्तावलीकुञ्जिका।

॥ शुभम्भूयात् ॥

# शुद्धि-पत्रम्

—:०:—

| पृष्ठ | पंक्ति | अशुद्धि | शुद्धि |
|---|---|---|---|
| २ | ३ | शस्त्रादौ | शास्त्रादौ |
| २ | ६ | मासान्य | सामान्य |
| २ | ११ | तस्योऽवला | तस्योज्ज्वला |
| २ | १३ | तासासाम् | तासाम् |
| ३ | ६ | प्रतिपादेन | प्रतिपादनेन |
| ३ | १५ | ध्वसः | ध्वंसः |
| ३ | १७ | अभ्युपगभात् | अभ्युपगमात् |
| ३ | २१ | वेदाप्रामाण्यम् | वेदाप्रामाण्यम् |
| ४ | ५ | कार्य | कार्य |
| ४ | ७ | तत्कर्तृत्वम् | तत्कर्तृत्वम् |
| ४ | १० | नस्तिकमते | नास्तिकमते |
| ४ | १४ | जनय | जनयन् |
| ५ | १ | यन्माणिना | यन्मणिना |
| ५ | ५ | उभयमाणि | उभयमणि |
| ५ | १० | साट्टश्यप्रतीतिः | सादृश्यप्रतीतिः |
| ५ | २१ | असम्म | असम्भ |
| ६ | १५ | नीलरूपवत्वाच्च | नीलरूपवत्त्वाच्च |
| ६ | १६ | तह्हि | तर्हि |
| ७ | १८ | परस्परात्यत्ताभाव | परस्परात्यन्ताभाव |

| | | | |
|---|---|---|---|
| ७ | २० | मूर्तत्वभुभयोः | मूर्तत्वमुभयोः |
| ७ | २३ | सामान्यत्वभित्य | सामान्यत्वत्वमित्य |
| ९ | ६ | सत्वे | सत्त्वे |
| ९ | १९ | त्रैकालिकसंसर्गावाच्छिन्न | त्रैकालिकसंसर्गावच्छिन्न |
| ९ | २० | अत्यन्ताभावः | ऽत्यन्ताभावः |
| १० | ३ | तादात्यम् | तादात्म्यम् |
| ११ | ८ | परिसाणं | परिमाणं |
| ११ | १४ | द्व्यणाकादि | द्व्यणुकादि |
| ११ | २३ | कथ | कथं |
| १२ | ४ | त्वणुपरमाणुत्वस्य | परमाणुत्वस्य |
| १२ | ११ | प्रत्यासत्या | प्रत्यासत्त्या |
| १४ | १ | आत्मानि | आत्मनि |
| १६ | ३ | तैजसत्व | तैजसत्वं |
| १६ | १८ | तादात्य | तादात्म्य |
| १६ | २३ | क्छेदकतया | च्छेदकतया |
| १८ | १६ | विशेषगुणत्वात् | विशेषगुणत्वात् |
| २० | १४ | यावत्किञ्चिद्विषयकम् | यावद्विषयकम् |
| २२ | ५ | अश | अर्श |
| २२ | ५ | अचप्रत्ययः | अच्प्रत्ययः |
| २२ | ११ | खण्डयत् | खण्डयत |
| २२ | १७ | सरोवरस्य | सरोवरस्येन्द्रियप्रणालिकया |
| २४ | ११ | प्रत्क्षत्व | प्रत्यक्षत्व |
| २५ | ५ | व्क्तेः | व्यक्तेः |
| २५ | ६ | सामाग्र्या | सामग्र्या |
| २५ | १४ | संसर्गाता | संसर्गता |

